तर्कहतम्' ननु नाभेदं साधयामः, किन्तु तदुत्पन्नत्वेन कुण्डलादिवद् भेदं व्यासेधामः। तत्राभेद एव स्यादिति शङ्काया अनैकान्तिकत्वेन दूषयति व्यभिचरति—क्व च क्व च, पितृपुत्रादिषु मुद्गरघटप्रध्वंसादिषु तथा दर्शनात्। ननु तदुत्पन्नत्वं नाम तदुपादानत्वम्, न तु तन्निमित्तत्वम्, अतो नानैकान्तिकत्वमित्याशङ्क्याह—क्व च गुणोपादानस्यापि फणिनो न गुणत्वम्, किन्तु मिथ्यात्वम्, अन्यथा कुण्डलादिवदबाधप्रसङ्गात्।

ननु तत्र न गुणमात्रं फणिन उपादानम्, किन्त्वविद्यया युक्तम्। तथाभूतस्यावस्तुत्वाद् युक्तं फणिनो मिथ्यात्वमित्याशङ्क्य, तत्तुल्यमत्रापीति दूषयति—न तथोभययुक्। अत्राप्यविद्यायुक्तस्यैव सत उपादानत्वम्, तथाभूतस्य न वस्तुसत्त्वम्, अतः सदुपादानत्वमसिद्धमिति न वस्तुसत्वं प्रपञ्चस्य।

## तत्र सत्कार्य्यवादिनः

यदसत् तन्न क्रियते, यथा शशविषाणमसच्चेत्, कार्य्यं तदपि न क्रियेत, असत्त्वात् क्रियते, तस्मात् सत्त्वैव क्रियमाणत्वस्य भवनकर्तृत्वव्याप्तत्वात्, तदपि सत्त्वमेव कार्य्यस्यासतः कर्तृत्वायोगात्। किं च, कारकत्वाविशेषेऽपि तन्त्वाद्यात्मका एव भवन्ति पटादयः, न कुविन्दाद्यात्मकाः। न ह्यसत्त्वे कश्चिद् विशेषः, तस्मात् तन्त्वादिषु सन्त एव पटादयो मन्तव्याः।

यदि पटादयस्तन्त्वादिषु कारणेष्वसन्तः, तदा तन्त्वादिभ्य एव। कस्मादुत्पद्यन्ते ? असत्त्वाविशेषाद् वीरणादिभ्यः कुतो नोत्पद्यन्ते ? पट एव वा कुतस्तन्तुभ्यो जायते, कटादयः कुतो न जायन्ते ? नियमदर्शनात् स्वकारणे कार्यस्य सत्त्वमुपेयम्। अपि चाशक्तात् कारणादशक्यस्य कार्य्यस्योत्पत्त्याऽतिप्रसङ्गात्। शक्तादेव कारणाच्छक्यस्यैव कार्य्यस्योत्पत्तिर्मन्तव्या। शक्तिमानेव शक्तो भवति, शक्तिश्च सम्बन्धरूपा संयोगादिवद् द्विष्ठैव मन्तव्या। शक्यस्य कार्यस्यासत्त्वे कथमुपपद्येत, कारणं च कार्योपहितमर्य्यादं भवति। ततो यथा कुण्डलाभावे कुण्डलोपहितमर्यादः कुण्डली न भवति, तथैव कार्य्याभावे कारणमपि न भवति।

## तत्रासत्कार्य्यवादिनः

ननु क्रियमाणत्वं न प्रमापकं भवति, असाधारणत्वात्, अनुपलब्धिविरोधाच्च। किं च, यथाऽसदशक्यक्रियम्, तथैव सदपि, सत्त्वात्। सती शक्तिरपरिणामिनी न क्रियागोचरः। यदि कार्यमजाताविनष्टरूपातिशयमव्यवधानमनतिदूरस्थानम्, तदा कथं स्वस्थेन्द्रियादेः पुंसः कदाचित् प्रत्यक्षम्, कदाचित् परोक्षमेव, कदाचिदनुमानमागमं वापेक्षते।

ननु धर्मलक्षणावस्थाभेदाद् धर्मिधर्मलक्षणाधिकरणास्तिस्रः परिणतयो भवन्ति। यथैकस्य सुवर्णधर्मिणः कटकमुकुटकुण्डलादयो धर्मा उपजनापायधर्माणः, तेषां च लक्षणपरिणामो भवति। हेमकारः कुण्डलं भङ्क्त्वा मुकुटं रचयति, तदा कुण्डलो वर्तमानतालक्षणं हित्वा अतीततालक्षणमापद्यते; मुकुटस्त्वनागततालक्षणं हित्वा वर्त्तमानतां प्रतिपद्यते, तथैव लक्षणगतोऽवस्थापरिणामोऽपि दृश्यते। प्रतिक्षणमुत्पत्तिनिरोधधर्माणोऽभिनवतमाभिनवतराभिनवपुराणपुराणतरपुराणतमाः, प्रयत्नरचितस्यापि वस्त्रादेः प्रान्ते पुराणतमत्वोपलम्भात्। तथा च नानातिशयं कार्यम्, किन्त्वेकातिशयोत्पत्त्यान्यातिशयानिवृत्त्या व्यवहारभेदोपपत्तिरिति चेन्न, विकल्पानुपपत्तेः।

तथा हि—त्रिविधोऽप्ययं परिणामरूपोऽतिशयो धर्मिणि कादाचित्कः सनातनो वा। कादाचित्कत्वे समान्यातोऽसदुत्पादः सनातनत्वे कुतो नैकस्मिन् धर्मिणि कुण्डलादयोऽतीतत्वादयो नवपुराणत्वादयश्च युगपत् प्रतीयन्ते। यदि तु कादाचित्कत्वेऽपि शक्त्यात्मना तेषां सत्त्वमित्युच्येत, तदपि किं शक्तिरतिशयश्च किमेकमेव तत्त्वं नाना वा? एकत्वे जन्माजन्मनिवृत्त्यनिवृत्तिप्रत्यक्षतापरोक्षतादीनामेकत्र यौगपद्यव्याघातः; नानात्वे तु शक्तेः सत्त्वेऽपि कथं नातिशयस्यासत उत्पादः? अतिशयस्यापि सर्वदैव सत्त्वे पूर्वोक्तो व्याघातः। अभिव्यक्त्यनभिव्यक्तिभ्यामपि न समाधानं सम्भवति, अतिशयस्य तयोः सदातनत्वे सैवाव्यवस्था, कादाचित्कत्वे त्वसदुत्पत्तिप्रसङ्गः, असत्त्वेऽपि कारणसामर्थ्यनियमात्।

कार्य्यनियम उपपद्यते, अन्यथा प्रधानोपादानत्वाद् विश्वस्य प्रधानस्य चान्वयितया सर्वत्रैकरूपत्वादुपादानात्मकत्वादुपादेयस्य कार्य्यजातस्य सर्वं सर्वतः सर्वत्र सर्वदा सर्वथा सदेव स्यात्। तथा चेदमतो नेदमिह नेदमिदानीं नेदमिदमेवं नेदमिति नियमो न स्यात्, विवेकहेतोरभावात्।

ननु सर्वत्र सत्त्वाविशेषेऽपि हेतुसामर्थ्यनियमादभिव्यक्तिनियम इति चेत्, तर्ह्यसदुत्पत्त्यापि किमपराद्धम्? येन तस्यां नियमो न स्यात्। सर्वेषां सर्वात्मकत्वादभिव्यक्तिभेदानुपपत्तेश्च दुरधिगमो नियमः। एतेन कुविन्दादिसमवधानेऽपि पटस्य नियमेन तन्त्वात्मकत्वेन सत्कार्यसाधनमिति प्रत्युक्तम्।

शक्तिश्च शक्यविषयापि शक्ताश्रयम्विनापि शक्यसद्भावम्। ज्ञानमिव ज्ञेयविषयमपि ज्ञात्राश्रयमन्तरेणापि ज्ञेयमुत्पत्स्यते। कारणत्वं च कार्य्यं प्रति कारणस्य शक्तिभेदः। स च

कारणाश्रय एव; न कार्यकारणोभयाश्रयः। निरूपणञ्च कार्य्यावगमाधीनम्, न कार्य्यसत्त्वा धीनम्। तस्मात् तन्त्वादयः स्वव्यापारात् प्रागसत्कार्य्यमुत्पादयन्ति, कारणत्वादभिव्यक्ति कारणवत्।

## पातञ्जलास्तु

सत्कार्यवादिनोऽपि नैकान्तेन सत एवोत्पत्तिमिच्छन्ति, अपि तूपादेयस्योपादानरूपेण सतः, न तूपादेयरूपेणापि सतः। अत एव यथा कुविन्दादिभ्यो भिन्नदेशे पटा उपलभ्यन्ते नैवं तन्त्वादिभ्योः। धर्मधर्मिभावश्चायं नैकान्तिकभेदे गवाश्वस्येव भवितुमर्हति, नाप्य भेदे धर्मिरूपस्येव। तस्मात् कथञ्चिद् भेदः, कथञ्चिदभेदश्चापि स्वीकर्त्तव्यः, उपादेयरूपेणापि सत्त्वे तूत्पत्तेरनुपपत्तेः साधनानां वैयर्थ्यात्। निष्पादितक्रिये कर्मणि साधनस्य साधनन्यायाति पातात्। न चासत उत्पत्तौ तस्य क्रियां प्रति कारकत्वानुपपत्त्या कथं कर्मकारकत्वमिति वाच्यम्, 'मञ्चाः क्रोशन्ति' इतिवत् तस्य मुख्यकारकत्वाभावेऽप्यौपचारिककारकप्रयोगे बाधाभावात्।

## तथाद्वैतिनस्तु

मृत्पिण्डादौ घटादिकार्य्यस्य स्वेन रूपेण सत्त्वे कुलालादिव्यापारवैयर्थ्यदर्शनात्, बालुकादौ तैलस्यासत्त्वे कारकव्यापारशतैरपि तदनुत्पत्तिदर्शनात्, सत्कार्यवादोऽसत्कार्य-वादश्च नोपपद्यते। तथाहि—'परमाणुः परमाण्वन्तरेण युज्यमानो द्व्यणुकमारभते' इत्युपेयते। तत्र द्व्यणुकासमवायिकारणरूपः संयोगः, परमाण्वोः कात्स्न्र्येनैकदेशेन वा? आद्ये स्थौल्यानुपपत्तिः, द्वितीये सावयवत्वापत्तिः, तथात्वे तस्यापि जन्यत्वेन मूलकारणत्वानुपपत्तिः।

परिणामोऽपि प्रधानस्य कात्स्न्र्येन, एकदेशेन वा? आद्ये कारणविनाशापत्तिः, द्वितीये सावयवत्वापत्तिः। कार्य्यमपि कारणव्यापारात् पूर्वं सत्, असद् वा? कथं कार्य्य-कारणभावग्रहः? खपुष्पेण कस्यचित् सम्बन्धानुपपत्तेः। ननूत्पद्यते घट इतिवत् प्रति-योगित्वेनासतोऽपि कार्य्यत्वं भविष्यतीति चेन्न, विकल्पानुपपत्तेः। प्रागभावप्रतियोगित्वं निराश्रयं साश्रयं वा? आद्ये शशविषाणतुल्यता, द्वितीये सत्कार्यवादापत्तिः। प्रागभाव-प्रतियोगित्वाश्रयत्वेनैव कार्य्यसत्त्वाङ्गीकारात्। सत्कार्यवादोऽपि न घटते, कारणव्यापार-वैयर्थ्यात्। आविर्भावतिरोभावयोरपि सदसत्त्वविकल्पग्रासात्। तस्मात् सदसद्विलक्षणत्वेना-निर्वचनीयतैव कार्यस्येति मन्तव्यम्।

विश्वसर्गविसर्गादिनवलक्षणलक्षितम् ।
श्रीकृष्णाख्यं परं धाम जगद्धाम ननाम तत् ॥
अत्र सर्गो विसर्गश्च स्थानं पोषणभूतयः ।
मन्वन्तरेशानुकथा निरोधो मुक्तिराश्रयः ॥

इति दशलक्षणस्य पुराणस्य, विशेषतः श्रीमद्भागवतपुराणस्य मुक्त्याश्रये मुक्तोपसृप्ये सर्वाधिष्ठाने सर्वप्राणिपरप्रेमास्पदे भगवत्येव तात्पर्य्यम्। अध्यारोपापवादाभ्यां निष्प्रपञ्चब्रह्मण एव प्रपञ्चमानत्वेन तस्यैव विजिज्ञापयिषितत्वात्। भगवांश्चागुणोऽनाकारोऽप्यचिन्त्यानन्तकल्याणगुणनिषेव्यो दिव्यसौन्दर्यमाधुर्य्यसौगन्ध्यसौस्वर्य्यसौरस्यलावण्यामृतसिन्धुसारसर्वस्वाकारत्वेनानन्तकोटिकन्दर्पदर्पदलनपटुतमविग्रहवत्त्वेन च योगिमुनिसुरेन्द्रसेव्यः सर्वान्तरात्मैव। तदुक्तम्—

श्रौत्रार्हन्तीचणैर्गुण्यैर्महर्षिभिरहर्दिवम् ।
तोष्टूय्यमानोऽप्यगुणो विभुर्विजयतेतराम् ॥

विशेषतश्च श्रीकृष्णस्वरूपो दशमे दशमो हरिरिति रीत्या दशमे दशमस्कन्धे दशम आश्रयो मुक्त्याश्रयो मुक्त्योपसृप्यः श्रीकृष्णः प्राधान्येन निरूपितः। सत्यज्ञानानन्तानन्दमनाकारमपि नानाकारं ब्रह्मैव प्रस्फुरति। श्रीकृष्णस्य सच्चिदानन्दरससारसरोजरूपत्वेन परमहंसमहामुनीन्द्रमनोमिलिन्दप्रेमास्पदत्वं भवति। प्रेमास्पदस्यानन्दसारसर्वस्वस्य सौन्दर्य्यमयता स्वारसिकी, सौन्दर्य्यज्ञानतज्जनितरागविशेषस्यैव प्रेमस्वरूपत्वात्। स्वात्मन एव निरतिशयनिरुपाधिकपरप्रेमास्पदत्वदर्शनात् प्रेमसौन्दर्य्ययोरभेद एव पर्य्यवस्यति। तस्मिन्नभिन्न एवात्मनि प्रेमसारसर्वस्वस्य श्रीकृष्णरूपेण प्रादुर्भावः, सौन्दर्य्यसारसर्वस्वस्य श्रीराधारूपेणाभिव्यक्तिः।

"एकं ज्योतिरभूद् द्वेधा राधामाधवरूपकम्" इति ऋक्परिशिष्टोक्तेस्तयोरैक्येऽपि द्वित्वम्, द्वित्वेऽप्यैक्यम्, लीलारसविशेषरसास्वादहेतुकत्वेनोपपत्तेः। एवं गौरतेजःसंवलितस्य श्यामधाम्नः श्यामलमहसालिङ्गितस्य गौरतेजसश्च स्वरूपैक्यमेव। परस्परभावात्मकत्वेनापि परस्परात्मता युज्यते। श्यामहृत्स्थगौरगोचरानुरागामृतमहाब्धिमृगाङ्करूपं गौरं महः, गौरमहाभावामृतमहाम्भोधिशशाङ्करूपं श्यामलं महः, तत एव तदनुरागसुखमास्वाद्य परमहंसा अपि श्रीपरमहंसा भवन्ति। स्वसुखनिभृतचेतसोऽपि तदीयरुचिलीलाकृष्टसारा भवन्ति। नैर्गुण्यस्थापि तल्लीलारसास्वादने रमन्ते। आत्मारामा आप्तकामा अपि तद्रसकामा भवन्ति।

आत्मारामाश्च मुनयो निर्ग्रन्था अप्युरुक्रमे ।
कुर्वन्त्यहैतुकीं भक्तिमित्थंभूतगुणो हरिः ॥

तेषाममलात्मनां परमहंसमहामुनीनां भजनीयस्वरूपोपस्थापनेन भक्तियोगविधानामेव भगवतोऽवतरणं कृष्णरूपेण,

तथा परमहंसानां मुनीनाममलात्मनाम् ।
भक्तियोगविधानार्थं कथं पश्येमहि स्त्रियः ॥

इति कुन्तीदेव्या वचनात् ।

शृङ्गाररससारसुधासरोवरसमुद्भूतसरोजस्वरूपं सकलगुणवृन्दावनं वृन्दावनम् तत्रत्यकिञ्जल्करूपा विद्युत्पुञ्जपिञ्जरा गोपसीमन्तिन्यः, तत्रत्यः परागः श्रीकृष्णः, तत्रत्य मकरन्दरूपा वृषभानुजा आत्मारामस्य श्रीकृष्णस्यात्मरूपैव सा । दशमेऽपि रासपञ्चाध्याय्यां सम्पूर्णैश्वर्य्यमाधुर्य्यरूपेण भगवतः प्रादुर्भावः । यथा समानस्यैव स्वातीजलविन्दोरधिष्ठानभेदेन गोरोचनमुक्तागजमुक्तादिरूपेण परिणतिविशेषो दृश्यते, तथैव व्रज-वृन्दावन-निकुञ्जादिभेदेन पूर्णपूर्णतरपूर्णतमरूपेण प्रभोः प्रकाशभेदो व्यज्यते। तत एव व्रजे वने निकुञ्जे च पूर्ण-पूर्णतर-पूर्णतमरूपेण भगवतोऽभिव्यक्तिर्जायते, श्रीराधया सार्द्धमेव श्रीकृष्णस्य पूर्णतमरूपेणाभिव्यक्तिः। तच्च स्वरूपमुद्वर्तितमिव, सौरभ्येणाभिव्यक्तमिव, स्नेहेन स्नातमिव, माधुर्य्येण स्नातमिव, स्वाङ्गमहसा स्नातमिव, तारुण्यामृतधारया कारुण्यामृतधारया च मार्जितमिव, लावण्येनानुलिप्तमिव, सौन्दर्य्येण भूषितमिव त्रैलोक्यलक्ष्म्या, तस्मादेवानन्तानन्तब्रह्माण्डेषु सौन्दर्यमाधुर्य्यलावण्यादिकं वितीर्य्यते व्यज्यते च । सौन्दर्य्यमाधुर्य्यसारस्य सौगन्ध्यसुधाजलनिधिभ्योऽङ्गप्रत्यङ्गेभ्यः कणस्थानीयान्यत्र तान्युपलभ्यन्ते,

स्वमूर्त्त्या लोकलावण्यनिर्मुक्त्यालोचनं नृणाम् ।
गीर्भिस्ताः स्मरतां ................................ ॥
आच्छिद्य विर्त्तिं सुश्लोकां वितत्य ह्यञ्जसानुकौ ॥

इत्यादि श्रीभागवतोक्तेः ।

अत्र परमानन्दरसामृतसिन्धोर्भगवतः श्रीकृष्णस्य माधुर्यसारसर्वस्वरूपा श्रीराधा। काश्चित् तु तदङ्गरश्मिभूताः, अन्याश्च तदङ्गकायव्यूहप्रायाः; काश्चित् तु परमानन्दसुधासिन्धोर्भगवतस्तरङ्गभूताः, काश्चित् तु तस्याचिन्त्यानन्तकल्याणगुणाधिष्ठात्र्यो महाशक्तयो गोपाङ्गनाभावमुपगताः, काश्चित् तु विशिष्टास्तत्परप्रकृतिततयो गोपसीमन्तिनीभावमुपजग्मुः; अन्यास्त्वनन्तानन्तब्रह्माण्डतत्युपादानभूताः, काश्चित्तु तदवान्तरानन्तकार्योत्पादानुकूला

अचिन्त्यज्ञानगोचरा अवान्तराः शक्तयः। काश्चित् तु विशिष्टभक्तानां बुद्धितद्वृत्तिरूपाः, अपराश्च अग्निकुमाररूपाः। काश्चन देवाङ्गनारूपाः, अन्याः श्रुतिरूपाः, मुनिरूपाः। अन्याश्च अयोध्यामिथिलादिषु रामस्वरूपानुरागिण्यस्तद्वरदानप्रभावाद् गोपालीभावमुपागताः। काश्चित् तु तत्पदार्थात्मका भगवतोंऽशा एव स्वीयमेव सौन्दर्यमाधुर्यादिकमनुभवितुं व्रजवधूभावमुपगताः, तदेकलभ्यत्वात् तदनुभवस्य। मणिमयप्राङ्गणे दिव्यरत्नस्तम्भेषु चात्मनः प्रतिबिम्बमालोक्य प्रभुस्तन्माधुर्यलुब्धमानसस्तदनुभवितुं गोपाङ्गनात्वं गतः। तन्मोहो यथा—

रत्नस्थले जानुचरः कुमारः सङ्क्रान्तमात्मीयमुखारविन्दम्।
आदातुकामस्तदलाभखेदान्निरीक्ष्य धात्रीवदनं रुरोद॥

कोटिकोटिकन्दर्पा अपि श्रीकृष्णस्य पादारविन्दनखमणिचन्द्रिकाकणमालोक्य तन्माधुर्यानुभवस्य गोपाङ्गनाभावमात्रैकलभ्यत्वात् तेऽपि तद्भावमापेदिरे।

साधनसिद्धा गोप्यो जनकपुरायोध्यादिगता अग्निकुमारदेवाङ्गनारूपा अनेकविधाः श्रुतिरूपा मुनिरूपाश्च याः पूर्वमुक्तास्ता अपि पुनर्द्विविधाः—अन्यपूर्विकाः, अनन्यपूर्विकाश्च। ऊढाः, अनूढाः, स्वकीयाश्च परकीयात्वमपि समुत्कण्ठावर्धनायोपगता अभिमानमात्रमेव तत्, न तु वास्तवम्।

मायाकल्पिततादृक् स्त्रीशीलनेनानुसूयुभिः।
न जातु व्रजदेवीनां पतिभिः सह सङ्गमः॥
प्रच्छन्नकामिता ह्यासां गोकुलेन्द्रस्य सौख्यदा।

व्रजसीमन्तिनीनां परमोत्कर्षस्तु भगवतैव व्यञ्जितः।

यद्यपि भगवदङ्गसङ्गेन पूर्णतां मन्यमानानां कासाञ्चित् पुनरुत्कण्ठां संवर्धयितुं भगवदन्तर्धानं युक्तम्, तथापि श्रीगोपाङ्गनानां प्रेम्णो महत्परिमाणत्वेन परमाणुमहतो ह्रासवृद्ध्यसंभवाद् भगवदन्तर्धानादिकम्, न तदनुवृत्त्यतिशयप्रयोजकम्, किन्तु तासां वैप्रलम्भिकप्रतापमहोत्कर्षविजिज्ञापयिषयैव भगवता स्वान्तर्धापनम्। अत एवोक्तम्—

न पारयेऽहं निरवद्यसंयुजां स्वसाधुकृत्यं विबुधायुषापि वः।
यामाभजन् दुर्जरगेहशृङ्खलाः संवृश्च्य तद्वः प्रतियातु साधुना॥

'वः' इति सम्बन्धमात्रे षष्ठी, युष्मान् प्रति स्वसाधुकृत्यं स्वीयप्रत्युपकारकृत्यं न पारये, ब्रह्मायुषाऽपि कर्त्तुं न शक्नोमीति भावः।

यद्वा 'वः' युष्माकं यदसाधारणं साधुकृत्यं तदहं न पारये। सर्वनैरपेक्ष्येण स
पाधिराहित्येन निर्मलप्रेमविशेषेण निरवद्यसंयुजां निर्दोषप्रेममयसम्बन्धवतीनां निर्द
चित्तैकाग्रयवतीनां वा दुर्जरा गेहशृङ्खलाः संवृश्च्य मदर्थे युक्तायुक्ताप्रतीक्षणात् प्रोज्झि
लोकाः, धर्माधर्माप्रतीक्षणात् त्यक्तवेदाः, सर्वनैरपेक्ष्येण संत्यक्तस्वाः, निरस्तात्माऽऽत्मी
ज्ञातिधना मामभजन्। नाहं तथाकर्तुं समर्थः, पित्रोः, बन्धुषु, तथाऽन्येषु चाहं स्निह्यामि

"ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम्" (श्रीमद्भ० गी० ४।११) इ
प्रतिज्ञातोऽपि च्युतः। तस्माद् वः साधुत्वेनैव तद् युष्मत् साधुकृत्यं प्रति यातु, प्रतिकृ
भवतु। भवतीनां सौशील्येनैव ममानृण्यम्, वस्तुतस्तु ऋण्येव भवामीति भावः।

परमपूज्याभिस्ताभिस्तु विचारितं यत् परमेश्वरत्वादेवायं सर्वगुणपरिपूर्णः, सर्वदो
गन्धरहितोऽप्यस्मत्प्रेमरसज्ञोऽप्यस्मान् प्रेमवत्त्वेनोत्कर्षयितुं स्वं चापकर्षयितुम्, अस्मदृण
भवितुमेवास्मान् त्यक्त्वाऽन्तर्हितः। तदिमं स्वयमेव पराबुभूषुं विजिगीषवो वयमेवाधन्याः
एवं भवितुमपारयन्त्योऽनेन फलतः प्रेम्णा जिता एवाऽभूम इति विश्वनाथचक्रवर्त्तिना
मभिप्रायः।

निकुञ्जोपासनायां यद्यपि श्रीकृष्णस्य रसिकत्ववदनन्यत्वमपि सम्पद्यते
श्रीकृष्णप्रेम्णोऽपि राधैकनिष्ठत्वं भवति, परमत्रापि विवेचनमर्हतीदं यच्छ्रीकृष्णस्य त
परमेश्वरत्वम्, सर्वसंभजनीयत्वं विद्यते न वा? प्रथमे—"ये यथा मां प्रपद्यन्
तांस्तथैव भजाम्यहम्" इति प्रतिज्ञानुसारेण तस्य भक्तभजनानुविधायित्वमपि सेत्स्यति
अन्ते तदनीश्वरत्वापत्तिः। श्रीकृष्णस्य शक्तिविशेष ईश्वरः, भक्तभजनानुविधायी कृष्णस्तु
तथेति, तदपि न मनोज्ञम्; स रूपान्तरेणान्यत्रापि स्निह्यतीत्यस्यानपायात्। गुरोरनेक
शिष्योपास्यत्ववद् भगवतः परमेश्वरस्यानेकजीवोपास्यत्वोपासकानुग्राहकत्वादिकं युज्य
एव। सूर्यस्य प्रतिप्रतिबिम्बं प्रतिबिम्बत्ववद् भगवतोऽपि प्रतिजीवमीश्वरत्वं भिन्नमेव
श्रीवाचस्पतिमिश्ररीत्या यथा तत्तत्सम्याज्ञातमायाविन एव मायिकपदार्थस्रष्टृत्वम्, तथै
जीवाज्ञातब्रह्मण एव मायिकविश्वस्रष्टृत्वम्, प्रतिजीवं भिन्नमेव। तेन तस्य तस्य जीवस
भगवन्तं प्रत्यनन्यत्वं सम्पद्यते तद्वत्। अत एव प्रातिस्विकस्येष्टदेवस्य स्वकर्तृकं स्नप
भोजन-तर्पणाद्यन्तरा स्नानादिराहित्यमेव मन्वते भक्ता इति सम्प्रदायः।

व्रजसीमन्तिन्यस्तूरोजरागान्वितैः कुचकुङ्कुमाङ्कितैः स्वैरुत्तरीयैरासनं व्यधाय सम
नेत्रयुगलार्घ्यपात्रयोस्तत्पदसमर्थितैः प्रेमाश्रुभिः पाद्यमर्घ्यञ्च समर्पयन्ति।

भगवद्भक्तिर्भगवत्वरूपैवेत्युक्तमेव, तत एव परमहंसानां महामुनीनाममलात्मनां ब्रह्मविद्वरिष्ठानां दृष्टमेव भक्तिफलमित्यप्युक्तमेव। भगवानेव सर्वपुरुषार्थरूपः।

परमभागवतस्य वृत्रस्य तु पुरुषार्थस्वरूपमनितरसाधारण्यं षष्ठ उक्तम्—

अहं हरे तव पादैकमूलदासानुदासो भवितास्मि भूयः।
मनः स्मरेतासुपतेर्गुणांस्ते गृणीत वाक् कर्म करोतु कायः॥
न नाकपृष्ठं न च पारमेष्ठ्यं न सार्वभौमं न रसाधिपत्यम्।
न योगसिद्धीरपुनर्भवं वा समञ्जस त्वा विरहय्य काङ्क्षे॥
अजातपक्षा इव मातरं खगाः स्तन्यं यथा वत्सतराः क्षुधार्ताः।
प्रियं प्रियेव व्युषितं विषण्णा मनोऽरविन्दाक्ष दिदृक्षते त्वाम्॥
ममोत्तमश्लोकजनेषु सख्यं संसारचक्रे भ्रमतः स्वकर्मभिः।
त्वन्माययाऽऽत्मात्मजदारगेहेष्वासक्तचित्तस्य न नाथ भूयात्॥

(श्रीमद्भाग० ६।११।२४-२७)

वृत्रो भगवन्तं हरिं प्रार्थयते, हे हरे! अहं तव पादमूलाश्रयाणां दासानामनुदासो भूयो भवितास्मि भवेयम्। मम मनः असुपतेः=प्राणनाथस्य तव गुणान् स्मरतु, वागपि तानेव कीर्त्तयतु, कायश्च तव कर्म करोतु। तद्भिन्नमहं नाकपृष्ठं ब्रह्मलोकादिपदं हे समञ्जस! निखिलसौभाग्यनिधे त्वां विरहय्य न काङ्क्षे=नेच्छामि, किन्तु अजातपक्षाः पक्षिशावकाः, घूकादित्रस्ता यथा मातरम्, दाम्ना बद्धा वत्सतरा अतृणादाः पयःपायिनो बालाः, वत्साः स्तन्यं पयः, व्युषितम्=प्रवासिनम्=दूरदेशगतं प्रियं कामेन विषण्णा प्रिया दिदृक्षते, तथा मे मनस्तापत्रयपीडितं कर्मभिर्निबद्धं कामादिविषण्णं त्वां दिदृक्षते। ममोत्तमश्लोक-जनेषु सख्यं त्वन्मायया देहादिष्वासक्तचित्तस्य भूयोऽपि तेष्वासक्तिर्न भूयात्।

यद्यपि पक्षिशावकानां माता समागत्य तेषां भयमपनयन्ती चञ्चुषु तदुचितभोज्यं निःक्षिपन्ती क्षुधमुपनयति, ततस्तेषां शान्तिर्भवति, परमत्र तु भगवत्स्वरूपमाधुर्यमन्तरा न कथञ्चिच्छान्तिः संभवति। वत्सतरा अपि स्वसुखमभिलषन्तोऽपि मातुः काममपि सेवा-मनभिलषन्तोऽपि तुष्यन्ति, परमत्र तु न तावन्मात्रेण तोषः, प्रीतिमन्तं प्रवासिनं पतिं प्रेमवती प्रिया विषण्णा विरहजर्जरिता यथा दिदृक्षते, स्वीयसर्वेन्द्रियव्यापारैः सेवमाना प्रियं सुखयितुम्, प्रियस्य सौन्दर्यसौस्वर्य्यादिभिर्गुणलीलावैदग्ध्यादिभिश्च स्वसर्वेन्द्रियाणि सुखयितुमिच्छति, तथैवाहमपि त्वां सेवे। तत एवाह—

मनः स्मरेतासुपतेर्गुणानां गृणीत वाक् कर्म करोतु कायः ॥
ममोत्तमश्लोकजनेषु सख्यं……………………………………।

तत्र प्रथमेन "अहं हरे तव पादैकमूलदासानुदासो भवितास्मि भूयः" इत्य
भक्तानां धर्मरूपः पुरुषार्थो बोध्यते। यद्यपि सर्वस्य दुःखात्यन्ताभावोऽपेक्षितः, स च मो
विना न सिध्यति, तथापि त्रिविधदुःखहर्त्तुर्हरेः समाश्रयेण दासानां तदनायाससिद्ध
मोक्षस्तु ज्ञानाधीनः; ज्ञानरूपधर्मापेक्षया धर्मिसमाश्रयणस्योत्तमत्वात्। तत्रापि प्रभुदा
स्वस्य सर्वोत्तमत्वाभिमाने भक्तान्तरतिरस्कारसंभवात् प्रभुदास्यादिभ्रंशः संभाव्यते। चि
केतुदशायां शिवतिरस्कारेण भ्रंशानुभवात् तत एव दासानुदासत्वं प्रार्थितम्। तत्र स्मरेत
स्मरणास्यात्मसुखैकसाधनत्वादात्मनेपदप्रयोगः कीर्त्तनस्यापि स्वार्थ एव मुख्यः, परार्थस्त्वा
पङ्क्तिक इत्यात्मनेपदप्रयोगः। 'कर्म करोतु कायः' इति सेवा तु प्रभोः सुखं यथाभवति तथ
क्रियते, न चाणुमात्रमपि स्वार्थपरत्वम्, अतः परस्मैपदप्रयोगः।

न नाकपृष्ठमित्यादिना भगवानेवार्थो बोध्यते। मनोवाक्कायभेदे त्रिविधं ध
सम्प्रार्थ्यार्थं प्रार्थयते। तत्र प्रवृत्तिमार्गसाध्यत्वात् त्रिविधोऽर्थो लौकिकः, निवृत्तिमार्गसाध्यत्वा
त्रिविधोऽर्थो वैदिकः।

तस्य षड्विधस्यापि यत्फलं तस्य षड्गुणपूर्णे भगवति विद्यमानत्वाद् भगवानेवानन्
भक्तानामर्थः। तत एव लौकिकवैदिकार्थनिराकरणपूर्वकं भगवन्तमेवाङ्गीकरोति। न नाक
पृष्ठम्, नाकः = स्वर्गः, पृष्ठम् = राज्यासनमिन्द्रासनम्, तच्च कालान्तरेण नश्यति, त्वयि
चाखण्डैश्वर्य्यस्य विद्यमानत्वात् तन्न काङ्क्षे। परमेष्ठी ब्रह्मा, रजोऽवतारत्वात
तत्स्थानमपि राजसम्, तत्र "ब्रह्मणा सह ते सर्वे मुच्यन्ते" इति वाक्यात् पारतन्त्र्ये
फलसिध्या स्ववीर्य्यहानिरेव। त्वयि चाखण्डवीर्य्यस्य विद्यमानत्वात् तदपि न काङ्क्षे।
सार्वभौमं सर्वभूमेरीश्वरत्वे सर्वत्र यशो भवति, तच्च दानादिसापेक्षत्वात् सावधिकमौपाधिकं च
राज्यान्ते नरकं ध्रुवं वाक्यादवसानं च दुष्टमेव, त्वयि चानवद्ययशसः सत्त्वात् त्वा विरह
तदपि नेच्छामि। रसाधिपत्यम्, भूमेरधः सर्वलोकाधिपत्यम्, तत्र भूम्यपेक्षया सुखभोगोऽधिकः,
स च श्रिया भवति। सा च त्वया बलेरपहृता। त्वयि चान्यपायिन्याः श्रियः सत्त्वाद
योगसिद्धीः, अपक्वयोगिनः सिद्धिबलेनापेक्षितविषयान् संसृज्य भोगं कुर्वन्ति, तेन योगाद
भ्रष्टा भवन्ति, येषां ज्ञानं भ्रान्तमेव। त्वयि नित्याखण्डज्ञानस्य सत्त्वात् ता अपि न काङ्क्षे।

अपुनर्भवं मोक्षम्, सात्त्विकज्ञानसाध्यत्वात् तत्परपुरुषख्यातेर्गुणवैतृष्ण्यमिति तस्यापि हेयत्वात् पूर्णानन्देऽखण्डितवैराग्यस्य त्वयि सत्वात् तमपि नेच्छामि। हे समञ्जस! पूर्णानन्दत्वेन परमपुरुषार्थरूप।

अजातपक्षा इति भक्तिमार्गीयं कामं दर्शयति। दिदृक्षाहेतुत्वे स्वरूपसौन्दर्य्यं नेत्रयोरम्बुजत्वेन तद्दिदृक्षया मनसो मधुपत्वं बोधितम्।

अरविन्दे विकसिते मधुपस्य कामः सिध्यति, नान्यथा, तथैव त्वत्कृपयैव मम संतोषः, नान्यथा। अजातपक्षाः पक्षिणः कदा किमप्यानीय मह्यं दास्यतीति मातरं दिदृक्षन्ते। अत्र क्षुधार्त्तानां नियतभक्ष्याभावादनियतविषयत्वम्, जातपक्षाणां च दिदृक्षाभावादनियतकालत्वं क्षुदुपाधिकत्वं चेति दूषणत्रयं संभाव्यान्यं दृष्टान्तमाह—स्तन्यम्, यथा वत्सतराः क्षुधापीडिताः कदा दुग्धं प्राप्स्याम इति तदिच्छन्ति, तेषां स्तन्यमात्रकामत्वाद् मातुरभावे तद्बुद्ध्या परस्या अपि स्तन्यपानप्रवृत्तिदर्शनाद् माताऽत्र नोक्ता। अत्र नियतविषयत्वेऽपि वत्सतरपदेनानियतकालत्वम्, क्षुदुपाधिकत्वमिति दूषणद्वयं वीक्ष्य तृतीयदृष्टान्तमाह—प्रियं प्रियेवोभयत्र प्रियपदप्रयोगाद् निरुपाधिकः स्नेहः सूचितः। व्युषितं प्रियं पतिं प्रीतिमन्तं यथा विषण्णा तद्विरहकातरा प्रिया प्रेमवती द्रष्टुमिच्छति। विषण्णेति नियतविषयत्वम्, न च विदेशादागमनानन्तरं दिदृक्षाया अदर्शनादनियतकालत्वमिति वाच्यम्; दर्शनदशायां दिदृक्षाभावस्यादूषणत्वात्। प्रीत्यतिशये तु दर्शनेऽपि दिदृक्षा वर्धते, न ह्रसति,

> यद्यप्यसौ पार्श्वगतो रहोगतस्तथापि तस्याङ्घ्रियुगं नवं नवम्।
> पदे पदे का विरमेत तत्पदात् चलापि यच्छ्रीर्न जहाति तत्पदम्॥

इति दर्शनात्।

'ममोत्तमश्लोकजनेषु सख्यम्' इति भक्तिमार्गीयं मोक्षं प्रार्थयते। भक्तिमार्गे भगवदीयत्वेनैव परिसमाप्तसर्वार्था इति वचनाद् भगवदीयत्वेन भगवल्लीलानुभवो मोक्षः। स च भगवदीयसङ्गाद् भगवद्विमुखविषयासक्तसङ्गाभावपूर्वकाद् भवति।

हे नाथ! स्वकर्मभिः संसारचक्रे भ्रमतोऽपि ममोत्तमश्लोकजनेषु सख्यं भूयात्। मोहेनात्मात्मजदारगेहादिषु सख्यं भूयात्। भगवद्भक्तसङ्गेन भगवद्यशोगानेनैव सर्वकर्ममूलाविद्यानिवृत्त्या संसारनिवृत्तिरनायासेनैव भवति।

संसारचक्रे भ्रमत इति संभावनामात्रम्, सायुज्यस्य मनस्विनां पदरजः प्रपत्स्य इति प्रोक्तत्वात्।



# मीमांसकमतानुसारेण शब्दार्थयोः संबन्धः

पण्डितक्षेत्रेशचन्द्रचट्टोपाध्यायः
संचालकचरः
अनुसन्धानसंस्थानस्य, वाराणसेयसंस्कृतविश्वविद्यालये ।

गङ्गानाथोऽद्वितीयो विबुधकुलगुरुर्ब्रह्मभूतः प्रयागे
गोपीनाथो विपश्चित् तिमिरनिधनकृत् काशिकायां चकासत् ।
न्यायाचार्यश्च वामाचरणगुरुवरो विश्वनाथे विलीनो
भाषाविज्ञानसत्रे ददतु मयि मतिं सम्प्रदायप्रकाशे ॥

न्यायमीमांसयोर्मध्ये वैमत्यं दृश्यते यतः ।
ब्रुवे शब्दार्थसम्बन्धं यथैव जैमिनेर्मतम् ॥

विस्मयपुरःसरा हि दर्शनशास्त्रस्य प्रवृत्तिरिति पाश्चात्त्यानामुक्तिः । यद्यपि प्राकृता जनाः प्रतिदिनं शब्दप्रयोगं कुर्वाणा अर्थं च जानन्तस्तयोः सम्बन्धस्य विषये न कामपि मतिमादधते । भाषाशास्त्रिणो दार्शनिकाश्च सम्बन्धमेतं विचारास्पदं मन्ययन्ते, बहूंश्चात्र विकल्पान् समाश्रयन्ति ।

अस्यां संगोष्ठ्यां भारतीयसम्प्रदाय एवोपस्थापनीयः । भारतीयदार्शनिकेषु नैयायिका मन्यन्ते—शब्दोऽनित्यः, तस्य अर्थेन सम्बन्धोऽपि साङ्केतिकः, मीमांसकास्तु—शब्दो नित्यः, शब्दार्थसम्बन्धोऽपि नित्य इत्यभ्युपपन्नाः ।

बहूनां विदुषां मतेन भारतीयदर्शनेषु कापिलं मतं प्राचीनतमम् । श्रुतावपि कपिलस्य नाम दृश्यते । "ऋषिं प्रसूतं कपिलं तमग्रे ज्ञानैर्बिभर्ति जायमानं च पश्येत्" इति श्वेताश्वतरोपनिषदि ( ५।२ ) श्रुतम् । कापिलाः सदसत्ख्यातिवादिनः शब्दस्याभिव्यक्तिमेव मन्यन्ते । तथैव मीमांसका अपि सत एव शब्दस्याभिव्यक्तिं प्रतिपद्यन्ते, सोऽयं गकार इति प्रत्यभिज्ञाकारणात्, न यथा नैयायिकास्तस्याभिघातादिजन्यत्वम् ।

जैमिनीयं पूर्वमीमांसाशास्त्रं धर्ममीमांसार्थं प्रवृत्तम् । स च धर्मो वेदबोधितः, अर्थरूपश्चेति सूत्रभाष्ययोः स्थितम् । "वेदोऽखिलो धर्ममूलम्" इति मनूक्तिः ( म० स्मृ० २।६ ) । धर्मविषये प्रामाण्यसाधनार्थं वेदानामपौरुषेयत्वं पूर्वमीमांसासूत्राणां प्रथमाध्यायप्रथमपादस्याष्टमेऽधिकरणे प्रतिष्ठापितम् । वेदाश्च शब्दरूपाः । वेदप्रामाण्यसिध्यर्थं

प्रथमाध्यायप्रथमपादस्य षष्ठेऽधिकरणे शब्दस्य नित्यत्वं साधितम्। प्रथमाध्यायतृतीय-पादस्य च दशमाधिकरणे शब्दार्थस्य जातिरूपत्वं दर्शितम्। अत्र जात्यर्थबोधनाय आकृतिशब्दस्य प्रयोगः कृतः। जातिस्तु नित्या। शब्दे नित्ये अर्थे च तथाभूते शब्दार्थयोः सम्बन्धोऽपि नित्य एव स्यात्। अतो धर्मज्ञाननिमित्तपरीक्षावसरे शास्त्रस्यास्य पञ्चमे सूत्रे तदुद्घोषितम्।

तच्च सूत्रम् "औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धस्तस्य ज्ञानम्, उपदेशोऽव्यति-रेकश्चार्थेऽनुपलब्धे तत् प्रमाणं बादरायणस्यानपेक्षत्वाद्" (१.१.५) इति। चतुर्थे सूत्रे "सत्-सम्प्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म तत् प्रत्यक्षम्, अनिमित्तं विद्यमानोपलम्भनत्वात्" इति प्रत्यक्षलक्षणं कृतम्, प्रत्यक्षप्रमाणस्य च धर्मे प्रामाण्याभावो दर्शितः। सता एव वस्तुना इन्द्रियाणां सम्बन्धे सति यो बोधो जायते, स एव प्रत्यक्षपदवाच्यः। स्वर्गादिरविद्य-मानफलो धर्मः। तं कथं प्रत्यक्षं बोधयेत्, तन्मूलं वा अनुमानम्? अत एव वेदस्य धर्म-बोधकत्वमित्यौपत्तिकसूत्र उपन्यस्तम्।

अत्र शबरस्वामिनो भाष्यम्—

**'औत्पत्तिकः'** इति नित्यं ब्रूमः। उत्पत्तिर्हि भाव उच्यते लक्षणया। अवियुक्तः शब्दार्थयोर्भावः सम्बन्धः, नोत्पन्नयोः पश्चात् सम्बन्धः। **औत्पत्तिकः शब्दस्यार्थेन सम्बन्धः।** **तस्य** अग्निहोत्रादिलक्षणस्य धर्मस्य निमित्तं प्रत्यक्षादिभिरनवगतस्य। कथम्? **उपदेशो** हि भवति। उपदेश इति विशिष्टस्य शब्दस्योच्चारणम्, **अव्यतिरेकश्च ज्ञानस्य।** न हि तदुत्पन्नं ज्ञानं विपर्येति। यच्च नाम ज्ञानं न विपर्येति, न तच्छक्यते वक्तुम्। नैतदेवमिति। 'यथा भवति यथा विज्ञायते, न तथा भवति यथैतन्न विज्ञायते तथैतदिति। अन्यदस्य हृदयेऽन्यद् वाचि स्यात्' एवं वदतो विरुद्धमिदं गम्यतेऽस्ति नास्ति वेति। तस्मात् **प्रमाणम्, अनपेक्षत्वात्।** न ह्येवं सति प्रत्ययान्तरमपेक्षितव्यम्, पुरुषान्तरं वापि। अयं प्रत्ययो ह्यसौ। **बादरायण**-ग्रहणं बादरायणस्य इदं मतं कीर्त्यते, बादरायणं पूजयितुम्, नात्मीयं मतं पर्युदसितुमिति।

सूत्रभाष्यव्याख्यावसरे श्लोकवार्त्तिके कुमारिलभट्ट आह—

औत्पत्तिकगिरा दोषः कारणस्य निवार्यते।
अबाधोऽव्यतिरेकेण स्वतस्तेन प्रमाणता॥

(सू० ५। श्लो० १०)

चोदना चोपदेशश्च विधिश्चैकार्थवाचिनः ॥
( श्लो० ११ )

इति च ।

शास्त्रदीपिकायां पार्थसारथिर्वक्ति—

"सत्यं लोके प्रमाणान्तरभूतानां प्रामाण्यम्, अतन्मूलानां चाप्रामाण्यं दृश्यते न त्वेवमपि सापेक्षं प्रामाण्यम्, किन्तु स्वत एव। अनाप्तवाक्यस्य त्वप्रामाण्यं न मूल विरहात्, किन्तु दुष्टमूलतया शब्दस्य दुष्टत्वात्, स्वाभाविकस्य प्रामाण्यस्यापवादात् अपौरुषेये तु वेदे यद्यप्याप्तप्रणीतत्वं नास्ति, तथापि प्रामाण्यस्येतदपेक्षाभावात्, अनात्म स्पर्शनिमित्तदोषाभावात् चानपोदितं प्रामाण्यं भवति। त्रेधा ह्यत्र पुरुषानुप्रवेशः—पद पदार्थसम्बन्धद्वारेण, वाक्यवाक्यार्थसम्बन्धद्वारेण, ग्रन्थस्यैव वा भारतादिवत् पौरुषेयत्वात् न त्वेतत् त्रयमप्यस्ति, पदपदार्थसम्बन्धस्य नित्यत्वम्, अत्रौत्पत्तिकशब्देनोक्तं वाक्यार्थस्य च पदार्थमूलत्वम्। वेदस्य चापौरुषेयत्वमुपरिष्टाद् वक्ष्यते। न च साक्षाद् बाधकमस्ती- त्यव्यतिरेकशब्देनोच्यते। अनुपलब्धार्थत्वाच्च नानुवादलक्षणमप्रामाण्यमस्तीति "अर्थेऽ- नुपलब्धे" इत्यनेनोक्तम् ( निर्णयसागरसंस्करणम्, पृ० ४४–५ )।

खण्डदेवकृतभाट्टदीपिकाव्याख्यायां भाट्टचिन्तामणौ वाञ्छेश्वरयज्वा सूत्रार्थमित्थं स्पष्टीकरोति—"शब्दस्यार्थेन सम्बन्धः प्रत्याय्यप्रत्यायकभावलक्षण औत्पत्तिको नित्यः। जातेः शब्दार्थत्वस्य वक्ष्यमाणत्वाच्छब्दस्य च नित्यत्वात् सम्बन्धस्यापि नित्यत्वम्।"

ननु पदानि बाह्यर्थकानि, यथा निषेधार्थक उदात्तो 'मा'शब्दोऽनुदात्तं च 'माम्' इत्यस्यापरं रूपं मेति शब्दः। अतो 'मा'शब्दस्यैताभ्यां भिन्नाभ्यामर्थाभ्यां कथं नित्यः सम्बन्धः सम्भवेदिति चेन्न; अत्र द्वा एव शब्दौ, नैकः। विस्पष्टस्तु स्वरभेदः। इत्थं शब्दार्थनित्यत्वं निर्बाधम्। वेदेऽपि 'न'शब्दद्वयं वर्तते—एको निषेधार्थो 'न'शब्दः, अपर- स्तुल्यार्थकः।

नदं न भिन्नम् अमुया शयानं मनो रुहाणा अति यन्त्यापः।
याश्चिद् वृत्रो महिना पर्यतिष्ठत् तासामहिः पत्सुतः शीर्बभूव।
( ऋ० सं० १।३२।८ )

इत्यत्र 'न'शब्द इवार्थकः।

आमासु पूर्षु परो अप्रमृष्यं नारातयो विनशन् नानृतानि ।

( ऋ० सं० २।३५।६ )

इत्यत्र अपां नपात्-स्तुतौ, नकारो निषेधार्थे द्विः प्रयुक्तः। अत्रापि प्रयोगे भेदो दृश्यते। इवार्थको 'न'शब्द उपमानात् परं प्रयुज्यते। निषेधार्थकश्च 'न'शब्दो निषेध्यात् प्रागायाति, अतो विस्पष्टः शब्दभेदः।

जैमिनीयमते सुस्थिता शब्दार्थनित्यता, यथा श्लोकवार्त्तिकव्याख्याकृत् कुमारिलशिष्य उम्वेकः प्राह—"शब्दार्थयोर्नित्यः सम्बन्धः, न समयः" इति ( श्लोकवार्त्तिकतात्पर्यटीका, पृ० १८५ )।

विदुषामाश्रवश्चायं क्षेत्रेशचन्द्रकाश्यपः ।
भाषाविज्ञानसंगोष्ठ्यां तनुते जैमिनेर्मतम् ॥



# कथं पुरश्चरणस्य मन्त्रचैतन्यप्रबोधकत्वम् ?

पं० अनन्तशास्त्रिफड़के

पुराणविभागाध्यक्षचरः, वाराणसेयसंस्कृतविश्वविद्यालये

पिण्डादिभेदेन पञ्चविधमन्त्रेषु[1] साधकद्वारा संपादितेन पुरश्चरणेन यद्येकमप्यक्षरं सिध्यति, तदा साधको रविताक्ष्येन्दुप्रभृतिभिस्तेजोबलादिषु स्पर्धत[2] इति तन्त्रशास्त्रीये डिण्डिमघोषे सर्वथा सत्यत्वेन विद्यमानेऽपि मन्त्रचैतन्यं प्रबोधयितुं पुरश्चरणादिसाधनेषु प्रवृत्तेष्वपि साधकेषु फलसिद्धेरनेकविधत्वं दृश्यते। तथाहि केषाञ्चन विशिष्टसङ्ख्यया मन्त्रजपे प्रारब्ध एव शीघ्रं गुरुदत्तमन्त्रप्राप्येष्टदेवताकर्षणं भवति। परेषां पुरश्चरणपूर्वकं मन्त्राणां जपस्य मध्येऽन्येषामन्तेऽपरेषां नैकवारं द्विवारं त्रिवारं वा कृतेऽपि यथाविधिपुरश्चरणपूर्वकं मन्त्रस्य जपे स्वेष्टदेवताकर्षणरूपमन्त्रचैतन्यं न प्रबुध्यतीति दृश्यते। अत्र कारणं किमिति निबन्धेऽस्मिन् लघुकाये समालोचयामः। तदर्थं च किञ्चित् शारीरम्, परतत्त्वादिजगतः कुण्डलिनीपरादितत्त्वानां च वर्णनं परममावश्यकं च मत्वा कुर्मः।

पुरश्चरणं नाम—पुरः मन्त्रोपास्तेरादौ दीक्षोत्तरकालं चरणं परिचर्या, अर्थात् स्वेष्ट-देवतामन्त्रसिध्यर्थं तनु-मन्त्र-जप-होम-तर्पण-अभिषेक-ब्राह्मणभोजनरूपाङ्गकलापसाधना। सा च गुरूपसर्पणतो विशिष्टसङ्ख्यया मन्त्रजपप्रारम्भे मध्येऽन्ते च प्रचलति। क्वचित् पुरश्चरणशब्दो मन्त्रचैतन्यप्रबोधकविशिष्टसङ्ख्यया जपकरणमात्रेऽपि प्रयुक्तो दृश्यते, यथा-द्विवारं च कृतेनापि पुरश्चारेण सिध्यति।

---

१. मन्त्रा एकाक्षराः पिण्डाः कर्तर्यो द्व्यक्षरा मताः।
वर्णत्रयं समारभ्य नवार्णा विधिबीजकाः॥
ततो दशार्णमारभ्य यावद्विंशति मन्त्रकाः।
तत ऊर्ध्वङ्गता मालास्तासु भेदो न विद्यते॥ इति।
(सौभाग्यभास्करीयनित्यातन्त्रम्)

२. यदक्षरैकमात्रेऽपि संसिद्धे स्पर्धते नरः।
रविताक्ष्येन्दुकन्दर्पशङ्करानलविष्णुभिः ॥
(सौभा० भा०)

मन्त्रग्रन्थेषु केचन मन्त्रा अनेकव्यञ्जनयुतैकस्वरयुक्ता दृश्यन्ते। त्र्यधिकव्यञ्जन-युक्तैकस्वरोच्चारणं प्रायो वैखर्या वाण्या न संभवत्येव। महाभाष्यकारः पतञ्जलिरित्थं शास्ति—"न ह्यचं विना व्यञ्जनस्योच्चारणमपि भवति" इति।

एवं स्थिते मन्त्राक्षराणां सम्यगुच्चाराभावात् कथं मन्त्रप्रबोध्यदेवताकर्षणरूपमन्त्र-चैतन्यं प्रादुर्भवेत्? मनुष्येष्वपि सम्यगुच्चारितैर्वाक्यैरेवार्थं प्रबुध्य, अनुकूलां प्रतिकूलां वा प्रवृत्तिं पश्यामः। एवं मन्त्रप्राप्यदेवताभिर्यदि साधकस्य वाण्येव न बुध्येत, तदा देवतासान्निध्यं साधकस्य कृते सुतरां दुर्लभं भवेदिति निश्चप्रचम्। त्र्यधिकव्यञ्जनयुक्तैकस्वरोचारण-सामर्थ्यमेव मुखावयवद्वारा वैखर्यां वाण्यां नास्ति। क्वचिन्मनुष्याः पश्वादिशब्दानामनुकरणं कुर्वन्ति, श्रोतारश्च तद् यथार्थमित्यभिप्रयन्ति, परन्तु न तद्वास्तविकम्, तदेव वास्तविकं येन काकादिरवेण काकादयः समागच्छेयुः। क्वचित् समागच्छन्तीति दृश्यते, तत्र तु नैकवारं तादृशं समुच्चारणं श्रुत्वैव भक्ष्यादिप्राप्तिर्भवतीति काकादिपक्षिभिस्तादृशः सङ्केतो गृह्यते, न तु स्वजातीयपक्षिकृतरवं दुःखादिबोधकं श्रुत्वा तत्र ते न समापतन्तीति प्रत्यहमस्माभिरव-लोक्यते। एवं देवतासान्निध्यसंपादको देवताभिः सर्वज्ञाभिरपि ज्ञायेतैतादृशः साधककृतः साधूच्चारितमन्त्राक्षर जप एव भवति। तत्कर्तुं वैखरीतो भिन्नया वाण्या यदि साधको जपं कुर्यात्, तर्हि देवतासान्निध्यकारणं साधुमन्त्राक्षरोचारणं संभवेत्। तत्र मुखस्थितानां यथेष्टं समुचारणे प्रतिबन्धकभूतानामवयवानामभावात्।

तान्त्रिकास्तु सृष्टेर्मूलं सकलं ब्रह्मेति प्रतिपादयन्ति, ततः पूर्वं तत्त्वातीतास्थितिरस्ति, तां च शास्त्रे परासंवित्, निष्कलब्रह्म-परावागादिनामभिर्व्यवहरन्ति, परन्तु वस्तुतः सावस्थानिर्वचनीयैव। तस्यामवस्थायां जगत्सर्जनादिकर्त्री ब्रह्मणः शक्तिस्तस्मिन्नेवाभेदरूपेण लीना तिष्ठति। ततस्तदेव ब्रह्म स्वं स्वात्मानं पश्यति, तदेव प्राथमिकमीक्षणम् 'अहमस्मि' इत्याकरकम् ( अहम् = प्रकाशः, ईक्षणम् = विमर्शः ) स्वयमेव भवति। तत्र प्रकाशविमर्श-रूपस्वरूपद्वयं शक्तेः प्रसरणरूपं विद्यते। अस्यामवस्थायां निष्कलं ब्रह्म सकलं भवति। शक्त्याः शिवस्य = ब्रह्मणः संश्लिष्टा एषावस्था सृष्टेर्मूलं कारणं भवति। ईक्षणादनन्तरं निष्कलस्य जायमानः सृष्टेः कर्तुं प्रथमः स्पन्द एव शिवतत्त्वपदेनोच्यते—

यदयमनुत्तरमूर्तिर्निजेच्छयाखिलमिदं जगत्स्रष्टुम्।
पस्पन्दे स स्पन्दः प्रथमः शिवतत्त्वमुच्यते तज्ज्ञैः॥
( तत्त्वसंदोहः–१ )

तथा—

निर्गुणः सगुणश्चेति शिवो ज्ञेयः सनातनः।
निर्गुणः प्रकृतेरन्यः सगुणः सकलः स्मृतः॥

( शारदाति० १ प० ६ )

सकलपरमेश्वरात् प्रादुर्भूतशक्तेः प्रसर एव नादबिन्दुरूपेणानेकधा भिद्यमानः शब्दब्रह्मरूपं शब्दावगम्यार्थरूपं च बिभ्रत् प्राणिनां देहे कुण्डलीरूपेण तिष्ठति।[१]

सकलाच्छंभोर्जातः शक्तेः प्रसर एव सदाशिव-ईश-रुद्र-विष्णु-ब्रह्मादिरूपेण क्रमशः प्रादुर्भवन्नव्यक्तान्महतत्त्वादिद्वारा क्रमेण पृथिव्यन्तां सृष्टिं संपादयति।[२] स एव शक्तेः प्रसरो मनुष्यशरीरे कुण्डलीरूपेण विद्यत इति प्रोक्तं प्राक्।

मनुष्यस्य शरीरे शरीरधारकः, सहस्रदलं मस्तकस्थमारभ्य कटिदेशादधोभागपर्यन्तं त्रयस्त्रिंशन्मणिकायुक्तोऽन्तश्छिद्रमयो मेरुदण्डो विद्यते, तस्याधोभागे मूलाधारसंज्ञकः कन्दापरनामको विभागो विद्यते। तत्रैषा कुण्डलिनीशक्तिः सर्पवत् सार्धत्रयकुण्डलाकृतिं विधायाधोमुखी मुखे स्वपुच्छं निधाय वा विद्यत इति योगशास्त्रीयः समयः।[3] मेरुदण्डस्य

---

१. सच्चिदानन्दविभवात् सकलात् परमेश्वरात्।
आसीच्छक्तिस्ततो नादो नादाद् बिन्दुसमुद्भवः॥
भिद्यमानात् पराद् बिन्दोरव्यक्तात्मा रवोऽभवत्।
शब्दब्रह्मेति तं प्राहुः सर्वागमविशारदाः॥
शब्दब्रह्मेति शब्दावगम्यमर्थं विदुर्बुधाः।
चैतन्यं सर्वभूतानां शब्दब्रह्मेति मे मतिः।
तत् प्राप्य कुण्डलीरूपं प्राणिनां देहमध्यगम्॥

( शारदाति० १ प० ६-१४ )

२. अथ बिन्द्वात्मनः शम्भोः कालबन्धोः कलात्मनः।
अजायत जगत्साक्षी सर्वव्यापी सदाशिवः॥

( शारदाति० १ प० १५-३९ )

३. पश्चिमाभिमुखी योनिगुदमेढ्रान्तरालगा।
तत्र कन्दं समाख्यातं तत्रास्ति कुण्डली सदा।
संवेष्ट्य सकला नाडी सार्धत्रिकुटिलाकृतिः।
मुखे निवेश्य सा पुच्छं सुषुम्णाविवरे स्थिता॥

( शि० सं० )

वामे 'इडा', मध्ये, 'सुषुम्णा', 'पिङ्गला' च दक्षिणभागेऽस्तीति योगशास्त्रीयः संकेतः[1]। गुरोः सन्निधौ तत्प्रयुक्तेन मार्गेण बन्धत्रययुक्तप्राणायामेन, मुद्राभिः, भावनायुक्तचेतसा च शनैः शनैः कुण्डलिनीशक्तिर्जागर्ति, यदा सा जागृता भवति, तदा सुषुम्णां प्रविश्य मेरुदण्डमध्यभाग-स्थितपद्मानि ( चक्राणि ) ग्रन्थींश्च भिनत्ति।[2] इयमेव शक्तिर्जागृता सती कुण्डलिनी ज्ञानम् , बलम् , तेजः, वीर्यम् , मेधाम् , सर्वदेवमयत्वं शिवस्वरूपं च साधकाय प्रयच्छति, परा, पश्यन्ती, मध्यमा, वैखरीति वाक्चतुष्टयरूपेण मनुष्यशरीरे प्रादुर्भवन्ती वैखर्या वाण्याऽशक्यानपि त्र्यधिकव्यञ्जनयुक्तान् मन्त्रस्थस्वरभागान् व्यञ्जयित्वा साधकं मन्त्रदेवता-सान्निध्यरूपमन्त्रचैतन्ययुक्तं संपादयति। तत्र परावाणी मूलाधारे विद्यते, पश्यन्ती स्वाधि-ष्ठाने, अर्थात् लिङ्गस्य पृष्ठे मेरुदण्डस्य मध्यभागे, मध्यमा तथैव हृदये, वैखरी मुखे। एतासां स्वरूपं स्थानं चोक्तम् , यथा—

सूक्ष्मा कुण्डलिनी मध्ये ज्योतिर्मात्रात्मरूपिणी।
अश्रोत्रविषया तस्मादुद्गच्छत्यूर्ध्वगामिनी॥

स्वयंप्रकाशा पश्यन्ती सुषुम्णामाश्रिता भवेत्।
सैव हृत्पङ्कजं प्राप्य मध्यमा नादरूपिणी॥

ततः सङ्कल्पमात्रादविभक्तोर्ध्वगामिनी।
सैवोरःकण्ठताल्वस्था शिरोघ्राणरदस्थिता॥

जिह्वामूलोष्ठनिस्यूतसर्ववर्णपरिग्रहा।
शब्दप्रपञ्चजननी श्रोत्रग्राह्या तु वैखरी॥[3]

( शार० ति० टी० राघवभट्टीये )

---

१- इडा वामे तनोर्मध्ये सुषुम्णा पिङ्गला परे।
( शार० प० ४१ )

२. सुप्ता गुरुप्रसादेन यदा जागर्ति कुण्डली।
तदा सर्वाणि पद्मानि भिद्यन्ते ग्रन्थयोऽपि च॥
( शिव० सं० )

३. शारदाति० १ प०, ५२ तः आपटलसमाप्ति।

श्रीविद्यारत्नसूत्रटीकायां शङ्करारण्यमुनिना तु परावागात्मतत्त्वरूपेण, मध्यमा शिवरूपेण, पश्यन्ती च विद्यारूपेण तापिनीं श्रुतिमालम्ब्य प्रोक्ता—

परावागात्मतत्त्वं च शिवतत्त्वं च मध्यमा।
विद्यातत्त्वं च पश्यन्ती ध्वनयस्तत्त्वलक्षणम् ॥ इति।

अतो मानसजपस्य पश्यन्त्या वाण्या समाचरितस्य विद्यातत्त्वनिष्पन्नस्य सर्वजपापेक्षया श्रैष्ठ्यं प्रतिपादितम्, मन्त्रदेवताचैतन्यस्य शीघ्रमुद्बोधकत्वात्। मन्त्रघटकसर्ववर्णोच्चारणक्षमत्वात् च।

विधियज्ञाद् जपो यज्ञो विशिष्टो दशभिर्गुणैः।
उपांशुः स्याच्छतगुणः सहस्रो मानसो जपः ॥ इति।
(नित्याषोडशिकार्णवे प० ५)

तेषां निगदादिजपानां स्वरूपं तु तत्रैव पञ्चमपटले समुक्तम्—

निगदः परमेशानि स्पष्टवाचा निगद्यते।
अव्यक्तस्तु स्फुरद्वक्त्र उपांशुः परिकीर्तितः ॥
मानसस्तु वरारोहे चित्तान्तर्गतरूपवान् ॥ इति।

एवं चैकाग्रतया, मन्त्रेष्टदेवतासंलग्नचेतसा, पश्यन्त्या वाण्या साधको यदा गुरुप्रदत्तं पूर्वोत्तराङ्गजातं विधिवत् संपाद्य विशिष्टसंख्यया मन्त्रं जपति, तदा मन्त्रचैतन्यं तेन पुरश्चरणरूपेणाङ्गजातेन सिद्धं भवति। पुरश्चरणे जातन्यूनतयैव चेतस ऐकाग्र्याभावाच्च मानसजपस्यासम्यक्तया विघ्नोत्पत्तौ चानेकवारं मन्त्रजपः संपादनीय इत्यपि प्रतिपादितं ज्ञानार्णवतन्त्रे सप्तदशपटले, तथाहि—

समाश्रित्य जपेद् विद्यां लक्षमात्रं यदा बुधः।
योषितो भ्रमयन्त्येव मनस्तस्य सुनिश्चलम् ॥
तदा द्वितीयलक्षं तु प्रजपेत् साधकोत्तमः।
पातालतलनागेन्द्रकन्यकाः क्षोभयन्ति तम् ॥
तासां कटाक्षजालैस्तु न मोहं याति साधकः।
तदा लक्षत्रयं कुर्यात् साधकः स्थिरमानसः ॥
तृतीयलक्षे संप्राप्ते द्रावयन्ति सुराङ्गनाः।
अभिमानेन सौन्दर्यात् सौभाग्यमदकारिणः ॥

साधकं द्रावयन्त्येव ततश्चासौ मनस्थिरः।
तदा लक्षत्रयं साधु सर्वपापनिकृन्तनम्॥
एवं लक्षत्रयं जपेद् व्रतस्थः स्वस्थमानसः॥

(इति १२-१७।)

अनेन स्वल्पकायनिबन्धेन स्थिरचेतसा कृतमानसजपेन सर्वमन्त्रगतवर्णोच्चारणाद् देवतानां साधकं सानिध्यरूपमन्त्रचैतन्यप्रादुर्भावः पुरश्चरणेन कथं भवति! कथं च तत्र विलम्बो भवतीति ज्ञातुं शक्यमिति शम्।

---

# भारतीयकर्मकाण्डसम्भारेषु दिव्यशक्तिमत् सम्भारद्वयम् आपो दर्भाश्च

पं० विन्ध्येश्वरीप्रसादत्रिपाठी, वेदाचार्यः, वाचस्पतिः (डी० लिट्०)

व्याख्याता, वाराणसेयसंस्कृतविश्वविद्यालये

श्रौतादिसर्वविधभारतीयकर्मकाण्डेषु प्रायोऽपां दर्भाणां च प्रयोगो भूयो भूयो बाहुल्येन सर्वत्रैव क्रियमाणोऽवलोक्यते। कर्मकाण्डकर्तृ पुरुष-द्रव्य-देशादिगतस्य साहजिकस्य नैमित्तिकस्य चोभयविधस्यामेध्यत्वस्य रक्षोऽसुराद्युपद्रवस्यान्यान्यदोषाणां चाप्यपनोदाय केषाञ्चित् प्रकृष्टानां गुणानामादानद्वारा तत्र तत्र कर्मकाण्डविधासु, अतिशयाधानायापि, आचमनोपस्पर्शनमार्जनप्रोक्षणप्रणयनादिष्वपां जलानाम्। एवं हि पवित्रवेदादिनिर्माणधारणादिविधौ, तथैवाग्न्यायतनवेदिकापरिस्तरणप्रभृतिषु विधिषु दर्भाणां कुशानां च प्रयोगो भवति।

## दर्भा आपो हि

नानाविधाभिर्दिव्यातिदिव्यशक्तिभिः सुसम्पन्नाः सन्ति। ते हि खलु तत्तत्कर्मकाण्डेषु विनियुक्ताः, प्रयुक्तास्तत्र तत्र सर्वत्रैव बहून् कुर्वन्ति। कर्मकाण्डसम्पन्नतायै तेषां प्रयोगो विशेषमहत्त्वाधायको भवति। भारतीयकर्मकाण्डसम्पूरकसंरक्षकसम्भारतत्त्वेषु सम्भारतत्त्वद्वयमिदम् ( आपो दर्भाश्च नाम ) अतिदिव्यशक्तिमदस्ति।

आपो हि—यः खलु अतीन्द्रियग्राह्यः, सूक्ष्मः, अव्यक्तः, सनातनः, सर्वभूतमयः, अचिन्त्यः "तदैक्षत बहुस्यां प्रजायेय" इत्यादिभिश्छान्दोग्योपनिषदादिषु वेदादिसर्वशास्त्रेषु प्रथितः सिसृक्षुर्जगन्मूलकारणं परब्रह्मपरमात्मास्ति, तेनैव सिसृक्षुणा स्वयं प्रादुर्भूतेन परमेश्वरेण 'आपो जायन्ताम्' इत्यभिध्यानेवादौ स्वकार्यब्रह्माण्डसृष्टेः प्रागेव स्वादव्याकृतरूपात्[1] शरीरात् सृष्टाः सन्ति। सृष्टासु च तास्वप्सु सर्वविधशक्तिरूपं बीजमारोपितमास्ते। यथा हि ( मनुस्मृ० १।७८ )—

१. अव्याकृतमेव कस्यचिद् दर्शनस्य प्रकृतिः। अव्याकृतशब्देन पञ्चभूतबुद्धीन्द्रियप्राणमनः-कर्माविद्यावासना एव सूक्ष्मरूपतया शक्त्यात्मना स्थिता अभिधीयन्ते।

[1]योऽसावतीन्द्रियग्राह्यः[2] सूक्ष्मो[3]ऽव्यक्तः[4] सनातनः[5] ।
सर्वभूतमयो[6]ऽचिन्त्यः[7] स एव स्वयमुद्बभौ[8] ॥
सोऽभिध्याय शरीरात् स्वात् सिसृक्षुर्विविधाः प्रजाः ।
अप एव ससर्जादौ[9] तासु बीजमवासृजत् ॥

इमा आपः स्नेहगुणविशिष्टाः सन्ति, स्निग्धान् मनोभावान् समुत्पादयन्ति; स्निग्धतामयानि स्नेहरूपाणि तत्त्वानि सृजन्ति । "आपः सृजन्तु स्निग्धानि"[10] इति श्रीसूक्तस्य द्वादशकण्डिकया ज्ञायते । आचमिताः स्पृष्टाः प्रोक्षिताश्चेमाः कर्मकाण्डविषये । तत्रत्यदेवताविषये कर्मकाण्डकर्तृहृदये स्नेहम्, अनुरागम्, निष्ठाम्, श्रद्धाम्, विश्वासं कर्मकाण्डक्रियासु विभिन्नकर्मकाण्डव्यापारेषु पारस्परिकसम्बन्धदार्ढ्यं च समुत्पादयन्ति । आसु सर्वभावानां स्रष्टृत्वं निहितमास्ते । अद्भ्यः पृथिवी अग्निर्वायुश्चन्द्रमाः सर्वं च जगज्जातमस्तीति सूक्तार्थसङ्ग्रहे उक्तमास्ते—

यदग्रे आप एवासन् अद्भ्यः सर्वमभूज्जगत् ।
अद्भ्यो हि पृथिवी जाता अग्निरप्यभवत् तथा ॥
वायुरर्को ह्यपां वत्सश्चन्द्रमास्सर्वमप्यथ ।
जीवं जीवरसं दिव्यममृतं जलमुच्यते ॥

---

१. योऽसाविति सर्वनामद्वयेन सकललोकवेदपुराणेतिहासप्रसिद्धः परमात्मा निर्दिष्टोऽस्ति ।

२. इन्द्रियमतीत्य वर्तत इत्यतीन्द्रियं मनस्तद्ग्राह्यः । यथाह व्यासः—
नैवासौ चक्षुषा ग्राह्यो न च शिष्टैरपीन्द्रियैः ।
मनसा तु प्रयत्नेन गृह्यते सूक्ष्मदर्शिभिः ॥

३. बहिरिन्द्रियागोचरः सूक्ष्मः ।

४. व्यक्तिरवयवस्तद्रहितोऽव्यक्तः ।

५. सनातनो नित्यः ।

६. सर्वभूतात्मा सर्वभूतमयः ।

७. अचिन्त्यः, इयत्तया परिच्छेत्तुमशक्यः ।

८. महदादिकार्यरूपतया प्रादुर्बभूव । धातूनामनेकार्थत्वात् 'उद्बभौ' इत्यत्रोत्पूर्वो भातिः, 'भा दीप्तौ' अदादिपरस्मैपदी धातुः ( अत्र ) प्रादुर्भावे वर्तते ।

९. अपां सृष्टिश्चेयं महदहङ्कारतन्मात्राक्रमेणात्र ज्ञेया ।

१०. स्नेहयुक्तानि कार्याणि सृजन्तु = उत्पादयन्तु । अपां स्नेहगुणत्वादिति भावः ( श्रीसूक्तस्य विद्यारण्यभाष्यम् ) ।

तस्मात् सर्वनिदानानामपां स्रष्टृत्वमुच्यते।
अप्सु प्रतिष्ठितः स्नेहस्तेनैव परमाणवः॥
जगद्भावाय सम्बद्धास्तद्धानौ स्याज्जगल्लय।

कर्मकाण्डोपयोगिसर्वविधभावानां सर्जनार्थं तेषां दाढर्य्यार्थं च भारतीयकर्मकाण्डानि ह्यपां प्रयोगमारभ्यैव सम्प्रवर्तन्ते। दृश्यते चापां कर्मकाण्डस्य प्राथमिकक्रियात्वेन विनियोगः। वैदिकवाङ्मयस्य प्रायोगिके स्वरूपे निखिलकर्मकाण्डमूलाधारे श्रौतकर्मकाण्डे सर्वादौ दर्शपूर्णमासे यागेऽपि। तत्र दर्शपूर्णमासयागे ह्यस्ति व्रतोपायनं नामैकं कर्म, व्रतग्रहणमिति यावत्। तत्र व्रतमुपैष्यम्, कर्त्ता प्राङ्मुख आहवनीयाभिमुखं तिष्ठन् सर्वप्रथमं सऽप एव उपस्पृशति। यथा हि श्रूयते शतपथब्राह्मणे (१।१।१।१)—

[1]व्रतमुपैष्यन्नन्तरेणाहवनीयं च गार्हपत्यं च प्राङ्तिष्ठन्नप उपस्पृशतीति।

एतदेव सुस्पष्टयति कात्यायनश्रौतसूत्रम् (२।१।११, पृ० ५९)।

अन्तरेणापराग्नी गत्वापरेणाहवनीयं प्राङ्तिष्ठन्नग्निमीक्षमाणोऽप उपस्पृश्य व्रतमुपैति 'अग्ने व्रतपते' 'इदमहम्' इति वा। [2]अत्रापामुपस्पर्शनमिदम् (शतपथ० १।१।१।१, पृ० १) इति च।

---

१. व्रतशब्देन कर्माङ्गभूताः शास्त्रतो नियमा उच्यन्ते, कर्माङ्गभूतयमनियमा व्रतम्। तदुपगमार्थः 'अग्ने व्रतपते' इत्ययं मन्त्र इत्युक्तं तन्त्ररत्न इति (का० सू० वृ० २।१।११)। तच्च दर्शपूर्णमासयोरग्न्यन्वाधानानन्तरं भवति, पशौ तु ब्रह्मवरणानन्तरमिति विशेषः। विहितं चैतत् कात्यायनेन "अपराह्णे व्रतोपायनीयमश्नीतः", "सर्पिषा सुहितौ" इत्यादिसूत्रद्वयेन (का० श्रौ० सू० २।१।१०, ११, पृ० ५९)। अत्र भाष्ये कर्कस्त्वेवमाह—व्रतोपायनीयमिति, व्रतम् = भोजनमुच्यते, यथान्यत्र तद्व्रतः स्यात् पयोव्रतमिति च, तद् येनोपेयते अभापादिना, तद्व्रतोपायनीयमिति। (शतपथब्रा० १।१।१) सायणभाष्योपक्रमस्य टिप्पणी। एवं च व्रतमिति कर्माङ्गभूतं यमनियमविधिपरिपालनम्। तदन्तर्विधिसमुपदिष्टं भोज्यं द्रव्यं वापि व्रतमित्युच्यते।

२. उपस्पर्शनं चेहाचमनं विवक्षितम्। नन्वापस्तम्बेन "अप आचामत्युपस्पृशति वा" (आ० श्रौ० सू० ४।३।२।९) इत्याचमनप्रतिद्वन्द्विभावेनोपस्पर्शनाभिधानात्, स्पर्शनमात्रं तत् प्रतिभाति। सत्यं तत्र तथा। इह तु "तेन पूतिरन्तरतः" इति वाक्यशेषादपोऽश्नात्यन्तरत एव मेध्यो भवतीति वदता आचमनमेव। यथा "अक्ताः शर्करा उपदधाति" इत्यत्र घृततैलादिष्वञ्जनसाधनत्वेन सन्दिह्यमानेषु "तेजो वै घृतम्" (तै० ब्रा० ३।१२।५।१२) इति वाक्यशेषाद् घृतमिति निश्चयः तद्वत्। सूत्रितं हि "सन्दिग्धेषु वाक्यशेषात्" (मी० मा० सू० १।४।२८) इति, (१।१।१।१ शत० सा० भाष्यम्)।

सायणभाष्यानुसारमत्राचमनम्, किन्तु ( का० श्रौ० सू० २।१।११ ) [1]कर्कभाष्यानुसारम्, आचमनम्, आलम्भनं वास्ति, तत्रापि म० म० श्रीविद्याधरवृत्त्यनुसारेणापां स्पर्शमात्रमेव, न त्वाचमनम्। तथैव सम्प्रदायोऽपि याज्ञिकानाम्।

यथा च ( का० श्रौ० सू० २।१।११ ) देवयाज्ञिकपद्धतौ—

"यजमानः स्फ्यमादाय गार्हपत्यदक्षिणाग्न्योरन्तरालेन गत्वा आहवनीयस्य पश्चात् समीपे पूर्वाभिमुखस्तिष्ठन्नाहवनीयं विलोकयन्नुदकं दक्षिणहस्तेन स्पृष्ट्वा "अग्ने व्रतपते व्रतम्" इति मन्त्रेण 'व्रतमुपैति' इति कर्मकाण्डे सर्वत्रैव बाह्याभ्यन्तरशुद्धिः, कर्तुस्तथा कर्त्रावृतानां सहायकानामृत्विगादीनां चापि मेध्यत्वं शुचित्वं पवित्रत्वं सर्वप्रमुखमधिकारितावच्छेदकं तत्त्वमस्ति। अन्येषु सत्स्वप्यधिकारितावच्छेदकेषु सर्वविधेष्वपि तत्त्वेषु पुरुषे विद्यमानेषु, यदि पुरुषोऽमेध्यः, अशुचिः, अपवित्रः, तदा कथमपि तत्र कर्मकाण्डे सोऽधिकृतो न भवति।"

अत्र विषये हि—

"श्रुतिस्मृत्युदितं कर्म न कुर्यादशुचिः क्वचित्।"

इत्येवमादीनि प्रयोगपारिजातादिग्रन्थेषु भृग्वादीनां महर्षीणां वाक्यानि सर्वत्र जाग्रति। पुरुषो हिं स्वभावत एवामेध्यः, अशुचिः, अपवित्र एव भवति। यतो हिं सोऽनृतं वदति। यथा भगवान् वेदो वदति—

"अमेध्यो वै पुरुषो यदनृतं वदति।"

( शतपथ० १।१।१।१, पृ० २ )

तस्मात् तत्र कर्मकाण्डे सोऽनधिकृतः। अतो हि स सर्वविधकर्मकाण्डेऽधिकृतो भवेत्। एतदर्थं कर्मादावपामुपस्पर्शनस्याचमनस्य च विधानमास्ते, आग्रहो वा दृश्यते।

---

१. अपामुपस्पर्शनमाचमनम्, लिङ्गात् "प्राङ् तिष्ठन्नप उपस्पृशति" इति प्रकृत्य "तेन पूतिरन्तरतो मेध्या वा आपो मेध्यो भूत्वा व्रतमुपयानि" इति। आलम्भनमात्रं वा आचमनानुपदेशात्, तस्य नैमित्तिकत्वात्, शब्दसामर्थ्याच्च "अप उपस्पृशति" इति। लिङ्गमर्थवादमात्रं दीक्षा स्नानवत् कर्कभाष्यम् ( २।१।११ ) का० श्रौ० सूत्रस्य।

अत्र म० म० विद्याधरशर्माणोऽपि का० श्रौ० सू० वृत्तौ—

"अग्निं पश्यन् उदकं स्पृष्ट्वा सत्यवदनादिरूपं व्रतं गृह्णीयात्", अत्रापामुपस्पर्शनं स्पर्शमात्रम्, न त्वाचमनम्, तस्यानुपदेशात्।

आपो[१] नैसर्गिकरूपेण शोधयित्र्यः सन्ति; मेध्याः[२], पवित्राः सन्ति, अतस्तासामुपस्पर्शनेन आचमनेन, स्पर्शेन च बाह्यत एव न हि शुद्धिर्भवति, अन्तरात्मनोऽपि शुद्धिः, मेध्यत पवित्रता भवति[3]। अत एवाप उपस्पृशति—

तद् यदप उपस्पृशति[४] तेन पूतिरन्तरतः[५]। मेध्या वा आपो मेध्यो भूत्वा व्रतमुपय नीति। पवित्रं वा आपः पवित्रपूतो व्रतमुपयानीति। तस्माद् वा अप उपस्पृशति ॥

( शतपथ० १।१।१ )

इमा आपो मातरो निर्माणकर्त्र्यो मातृवत् पालयित्र्योऽपि सन्ति। मानवगतसर्वविध मलिनतत्त्वानां शोधयित्र्यः स्वक्षरणेनापि जनान् पुनन्ति, अतो हीमा घृतप्वः कथ्यन्ते द्योतमाना इमा विश्वं सर्वं रिप्रम् = पापं प्रवहन्ति = प्रकर्षेणापनयन्ति। स्नानेन, पानेन, स्पर्शे नापि मनुष्यान् पुनन्ति।

आपो अस्मान्मातरः शुन्धयन्तु घृतेन नो घृतप्वः पुनन्तु।
विश्वँ हि रिप्रं[६] प्रवहन्ति देवीरुदिदाभ्यः शुचिरापूत[७] एमि ॥

( शु० य० मा० सं० ४।२ )

---

१. आपोऽपि शुन्ध्युवः, उच्यन्ते शोधनादेव—निरुक्ते अ० ४।२, पृ० १७९।

२. मेध्या वा आपः पवित्रा वा आपः—शतपथ० १।१।१।

३. आपः पवित्रमुच्यन्ते—निरु० ५।२।३४ पदे; "शतपवित्राः स्वधया मदन्तीर्देवीर्देवानामपि यन्ति पाथः" ( ऋ० ७।४७।३ )।

४. तत् प्रकृतं यदुपस्पर्शनं तेनान्तरतः पूतिः पवित्रा भवति—इति सायणः।

५. अन्तरशब्दोऽत्रान्तरात्मवाची। यथा चाहामरकोशे—

अन्तरमवकाशावधिपरिधानान्तर्धिभेदतादर्थ्ये।
छिद्रात्मीयविनाबहिरवसरमध्येऽन्तरात्मनि ॥

( अमर० ३, नानार्थवर्गे श्लो० १८६,८७ )

६. रपो रिप्रमिति पापनामनी भवतः—निरु० ४।२१।

७. शुचिरापूत इति शब्दाभ्यां स्नानाचमनाभ्यां बहिरन्तश्च शुद्धिरुक्ता—४।२ शु० य० मा० सं० महीधरभाष्ये।

अत एव निखिलेऽपि भारतीयकर्मकाण्डे ह्यादौ मध्येऽन्ते च यथार्हमपामुपस्पर्शनादि विहितमास्ते ।

## अपां प्रणयनम्

सर्वत्र कर्मकाण्डे जलस्यावश्यकता वर्तत एव । तदिदं जलं कर्मारम्भे सङ्गृह्यते । तत्र पौराणिके कर्मकलशार्चनविधिना, स्मार्ते, श्रौते चापां प्रणयनविधिनोपकल्प्यते । श्रौतेऽपां प्रणयने अध्वर्युर्गार्हपत्यस्याग्नेरुत्तरतः पूर्वकल्पित आसने उपविश्य, वारणकाष्ठनिर्मितं चतुष्कोणं चमसं वामहस्ते कृत्वा, दक्षिणहस्तस्थोदपात्रेण स्वयं तस्मिन् चमसे उदकम् (अपो जलमिति यावत्) आसिच्य, दक्षिणहस्तेन तमादाय, गार्हपत्यस्योत्तरतो निधाय, मन्त्रेण तमालभते, ततः "ब्रह्मन्नपः प्रणेष्यामि" (का० श्रौ० सू० २।३।२) इति ब्रह्माणं पृच्छति । ब्रह्मा च—

ओं प्रणय यज्ञं देवता वर्धयत्वं नाकस्य पृष्ठे यजमानो अस्तु ।
सप्तर्षीणाँ सुकृतां यत्र लोकस्तत्रेमं यज्ञं यजमानं च धेहि ॥
(का० श्रौ० सू० २।२।८)

इत्यन्तमुपांशु पठित्वा "ओं प्रणय" इत्युच्चैरुक्त्वा तमनुजानाति । ततोऽध्वर्युस्तं चमसं गृहीत्वा, आहवनीयाग्नेरुत्तरस्यां दिशि पूर्वतः कल्पित आसने प्राङ्मुख उपविश्य, बर्हिर्वेदिदर्भेषु तं सजलं चमसं मन्त्रेण स्थापयति । एवमत्रापां जलस्य यत् स्थापनं क्रियते, तदेतदपां प्रणयनं नाम । असुररक्षांसि यज्ञविघातकतत्त्वानि यज्ञं प्रविष्टानि न स्युः, प्रविष्टानि च नष्टानि, दूरं गतानि, अपसारितानि वा भवेयुरेतदाद्यर्थमपां प्रणयनं क्रियते । मुख्यतया आपो हि तेषामसुररक्षस्तत्त्वानां नाशार्थं वज्ररूपा सन्तीति "वज्रो वा आपः" (शतपथ० १।१।१।१७, पृ० ११), "वज्रो हि वा आपः" (शतपथ० १।१।१) इत्यादिश्रुतिभिर्विज्ञायते ।

अपामिदं प्रणयनं तेषां कृते वज्रोद्यमनमेवास्ति । यस्माद् भीतानि असुररक्षस्तत्त्वानि यज्ञं न व्याप्नुवन्ति, तस्मादेवापां प्रणयनं क्रियत इति । अथ च 'अप एव ससर्जादौ' इति पूर्वोक्तमनु-(१।८)-वचनानुसारं सृष्ट्यादौ सृष्टिभिराभिरद्भिरिदं सर्वं सृष्टिप्रपञ्चतत्त्वजातमासमस्ति, ततस्तासामपामुपस्पर्शनेन स्पर्शेनाचमनेन, प्रोक्षणेन, प्रणयनेन सर्वं कर्म, कर्मफलं चाप्तं भवति । एवं चात्र यज्ञे कर्मकाण्डे होत्राध्वर्युणा, ब्रह्माग्नीध्रेण स्वयं यजमानेन च

सङ्गीभूतेनापि कर्त्रा प्राप्तव्यं प्रापयितव्यं यत् तत् कर्म, कर्मफलं च स्वस्व-प्रमादात् प्राप्तुं प्रापयितुं पूरयितुं न शक्यते, तत् सर्वं कर्म, कर्मफलं चापां प्रणयनेन, तथोपस्पर्शनेन, स्पर्शेन, आचमनेन, प्रोक्षणादिना सम्यगाप्तं भवति, पूर्णलब्धं भवति। यथा च शतपथे (१।१।१।१५) श्रूयते—

"यद्वेवास्यात्र होता वा अध्वर्युर्वा ब्रह्मा वा आग्नीध्रो वा स्वयं यजमानो वा नाभ्यापयति तदेवास्यैतेन सर्वमाप्तं भवति ॥" इति।

अपां हि सर्वमयत्वात् तासां कर्मकाण्डे संयोगेन सर्वेषां देवानां पितॄणां चोपस्थितिर्भवति।

आपो वा इदं सर्वं भूतान्यापः प्राणा वा आपः पशवोऽआपोऽन्नमापोऽमृतमापः सम्राडापो विराडापः। स्वराडापश्छन्दांस्यापो ज्योतींष्यापो यजूंष्यापः सत्यमापः, सर्वा देवता आपो भूर्भुवः सुवराप ओम् ॥

इति तैत्तिरीयारण्यकश्रुत्या विज्ञायते। महाभारतेऽपि तथैव—

आपो देवगणाः सर्वे आपः पितृगणास्तथा। इति।

(म० भा० १, ७, ८)

अत एव बहुषु स्थलेषु जल एव पूजनम्, तथाहुतिप्रदानमपि देवतोद्देश्येन क्रियते। अपां पर्यायशब्दैरपि तासाममृतत्वजीवनत्वादिदिव्यातिदिव्यशक्तिमत्त्वं सुविदितमेवास्ते।

## दर्भाः

अपामेव केचित् सारभागा दर्भात्मना परिणताः सन्ति। यथाहि शतपथेन विज्ञायते—

१. यद्वेवापः प्रणयति। देवान् ह वै यज्ञेन यजमानांस्तान् असुररक्षसानि ररक्षुर्न यक्ष्यध्व इति। ततो देवा एतं वज्रं ददृशुर्यदाप तत एवं वज्रमुदयच्छन् तस्याभये नाष्ट्रे निवाते यज्ञमतन्वत, तस्मादपः प्रणयति।

२. "अद्भिर्वा इदं सर्वमाप्तम्" (शतपथ० १।१।१।१४)। "आप आप्नोतेस्तासामेषा भवति" निरु० दैवतकाण्डे, अ० ९, सं० २७।२१, पृ० ६९२। सर्वमाभिराप्यमिति टीका।

३. अपां प्रणयनकर्मणा।

वृत्रो ह वा इदं सर्वं [1]वृत्वा शिश्ये ।
यदिदमन्तरेण द्यावापृथिवी ।
स यदिदं सर्वं वृत्वा शिष्ये तस्माद् वृत्रो नाम ॥

( शतपथ० १।१।१।३, पृ० २८ )

तमिन्द्रो जघान । स हतः पूतिः सर्वत एवापोऽभि प्रसुस्राव ।
सर्वत एव ह्ययं समुद्रः ।
तस्मादुहैका आपो बीभत्सांचक्रिरे ।
ता उपर्युपर्यति पुप्रुविरे । अत इमे दर्भाः ।
ता एता अनापूयिता आपः ।
अस्ति वा इतरासु संसृष्टमिव यदेना वृत्रः पूतिरभि प्रास्रवत् ।

( शत० ब्रा० १।१।१।३, पृ० २९ )

तस्मादपां ससारत्वाय दर्भैः सह ता आपः प्रयुज्यन्ते । स्वतन्त्ररूपेणापि दर्भाणां प्रयोगो महोपकारी भवति । अतो हि दर्भाणामपि भारतीयकर्मकाण्डेषु सर्वत्रोपयोगः क्रियते । एतैः करणैः सर्वेषां पदार्थानां सर्वविधं पावनत्वं सम्पद्यते । दर्भेष्वपि काश्चिद् विशिष्टा शक्तयो विराजन्ते, याश्चापि बहूपकुर्वन्ति । तासां स्वरूपविवृतिः पुनर्यथासमयं भविष्यति ।

———

१. आवृत्य शयनं कृतवान् ।

# अद्वैतदर्शने गुरुपरम्परा

पण्डितराज एस्० सुब्रह्मण्यशास्त्री

अध्यापकः, विश्वविद्यालयानुदानायोगनियुक्तः

वाराणसेयसंस्कृतविश्वविद्यालये

"आचार्याद्धैव विद्या विदिता साधिष्ठं प्रापत्" (छा० उ० ४) इति श्रुतिः सत्यकामजाबालमुखेनाचार्योपदिष्टैव विद्या साफल्यमश्नुते इति कण्ठरवेणाह। एवम् "तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्, समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्" ( मु० उ० २ ), "अधीहि भगव इति होपससाद सनत्कुमारं नारदः" ( छा० उ० ७-१-१ ), "अनन्यप्रोक्तेऽगतिरत्र नास्ति" ( कठ० २ ), "त्वं हि नः पिता योऽस्माकमविद्यायाः परं पारं तारयसि" ( प्रश्नोप० ६ ) इत्याद्याः श्रुतयो ब्रह्मविद्याग्रहणं गुरोः सकाशादेवेति निर्धारयन्ति। "आत्मा श्रोतव्यः" इत्यत्रापि गुरोरित्यध्याहार्यम्। भगवान् श्रीकृष्णोऽपि "तद् विद्धि प्रणिपातेन परिप्रश्नेन सेवया" इति गुरूपसंगमनेऽर्जुनं प्रेरयन्निदमेवाभिप्रेयाय।

अत्र सर्वत्राभिहिता ब्रह्मविद्या अद्वैतब्रह्मविद्येत्येव उपनिषाद एकवाक्यतयाऽवगम्यते, "एकमेवाद्वितीयम्", "नेह नानास्ति किञ्चन" इत्यादिवाक्यपर्यालोचनात्। सेयमद्वैतविद्या —

सदाशिवसमारम्भां शङ्कराचार्यमध्यमाम्।
अस्मदाचार्यपर्यन्तां वन्दे गुरुपरम्पराम्॥

इति साम्प्रदायिकश्लोकानुसारात् श्रीपरमेश्वरमारभ्य प्रवृत्ता अद्यावध्यविच्छिन्ना दृश्यते। यद्यपि "नारायणं पद्मभुवं वसिष्ठम्" इत्यादिसम्प्रदायश्लोके श्रीमान् नारायणो गुरुपरम्परामूलभूत इति श्रूयते, तथापि न विरोधः, शङ्करनारायणाभेदात्। यद्वा परमेश्वरो वटविटपिसमीपे मौनेन ब्रह्मादीनामुपदिदेश—"गुरोस्तु मौनं व्याख्यानम्" इत्याद्यनुरोधात्। भगवान् नारायणस्तु वचनेनोपदिशतां गुरूणामाद्य इति विरोधपरिहारः।

यस्य देवे परा भक्तिः यथा देवे तथा गुरौ।
तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः॥

इति श्वेताश्वतरश्रुतिर्वेदार्थस्य ब्रह्मणोऽवगमे गुरुभक्तेरावश्यकतां ब्रूते।

भगवान् शङ्कराचार्यो ब्रह्मविद्योपदेष्टुः सदृशपदार्थो लोके नास्त्येव। यतो हि स्पर्शमणिरयः स्वर्णं करोति, न तु स्पर्शम्, येन तत्कृतस्वर्णेनेतरानपि लोहान् स्वर्णरूपेण परावर्तयितुं

शक्येत। ब्रह्मभूतो ब्रह्मविद्योपदेष्टा त्वाचार्यः शिष्यमपि स्वात्मभूतमेव करोति, सोऽपि शिष्योऽन्यानपि स्वशिष्यान् ब्रह्मभूतान् कर्तुं शक्नुयादिति किमु वक्तव्यं गुरुमहिम्नः। अलौकिकः खल्वाचार्यः। यथा हि यूपाहवनीयादयः श्रौतकर्माङ्गभूताः पदार्था न लौकिकाः काष्ठाग्न्यादयः, अपि तु वैदिकहोमादिसंस्कारसाहित्यादलौकिका इति मीमांसकाः संगिरन्ते। तथा ब्रह्मविद्योपदेष्टा गुरुरलौकिकेन ब्रह्मसाक्षात्कारेणालौकिकमहिम्ना च युक्तत्वादलौकिकः, दृष्टान्तैर्बोधयितुमशक्य इत्यभिप्रायः।

अद्वैतविद्याया गुरुपरम्परा श्रीपरमेश्वरम्, श्रीनारायणं वा आरभ्याविच्छिन्ना वर्तत इति प्रदर्शयितुमयं लघुनिबन्धः प्रारभ्यते।

तथाहि भगवान् नारायणो ब्रह्मणे स्वीयतत्त्वमुपदिशति श्रीमद्भागवते—

अहमेवासमेवाग्रे नान्यद् यत् सदसत्परम्।
पश्चादहं यदेतच्च योऽवशिष्येत सोऽस्म्यहम्॥
ऋतेऽर्थं यत् प्रतीयेत न प्रतीयेत चात्मनि।
तद्विद्यादात्मनो मायां यथाऽऽभासो यथा तमः॥ इति।

(श्रीमद्भा० २।९।३२-३३)

अत्रात्मन एव कालत्रयावस्थानम्, द्वैतं तु मायात्मकं विनैवार्थं प्रतीयत इति वदन् अद्वैतसम्प्रदायमेवोपदिशति।

भगवदवतारेष्वपि यत्र यत्र भगवानुपदिशत्यात्मतत्त्वम्, तत्र तत्राद्वैतमेवोपदिशति। तथाहि कपिलावतारे—

ज्ञानमात्रं परं ब्रह्म परमात्मेश्वरः पुमान्।
दृश्यादिभिः पृथग्भावैर्भगवानेक ईयते॥
ज्ञानमेकं पराचीनैरिन्द्रियैर्ब्रह्म निर्गुणम्।
अवभात्यर्थरूपेण भ्रान्त्या शब्दादिधर्मिणा॥ इति।

(श्रीमद्भा० ३।३२।२६,२८)

अत्राद्यश्लोकेन यथा मृदेव घटशरावाद्याकारैरारोपितैर्दृश्यते, तथा आत्मैव दृश्यभेदेनारोपितेन नाना अवगम्यत इत्युक्तम्। द्वितीयश्लोकेन निर्गुणं ब्रह्मैव प्रपञ्चरूपेणावभातीत्युक्तम्। अत्र स्पष्टा अद्वैतप्रक्रिया।

# अद्वैतदर्शने गुरुपरम्परा

पण्डितराज एस्० सुब्रह्मण्यशास्त्री
अध्यापकः, विश्वविद्यालयानुदानायोगनियुक्तः
वाराणसेयसंस्कृतविश्वविद्यालये

"आचार्याद्धैव विद्या विदिता साधिष्ठं प्रापत्" (छा० उ० ४) इति श्रुतिः सत्यकामजाबालमुखेनाचार्योपदिष्टैव विद्या साफल्यमश्नुते इति कण्ठरवेणाह। एवम् "तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्, समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्" ( मु० उ० २ ), "अधीहि भगव इति होपससाद सनत्कुमारं नारदः" ( छा० उ० ७-१-१ ), "अनन्यप्रोक्तेऽगतिरत्र नास्ति" ( कठ० २ ), "त्वं हि नः पिता योऽस्माकमविद्यायाः परं पारं तारयसि" ( प्रश्नोप० ६ ) इत्याद्याः श्रुतयो ब्रह्मविद्याग्रहणं गुरोः सकाशादेवेति निर्धारयन्ति। "आत्मा श्रोतव्यः" इत्यत्रापि गुरोरित्यध्याहार्यम्। भगवान् श्रीकृष्णोऽपि "तद् विद्धि प्रणिपातेन परिप्रश्नेन सेवया" इति गुरूपसंगमनेऽर्जुनं प्रेरयन्निदमेवाभिप्रेयाय।

अत्र सर्वत्राभिहिता ब्रह्मविद्या अद्वैतब्रह्मविद्येत्येव उपनिषाद एकवाक्यतयाऽवगम्यते, "एकमेवाद्वितीयम्", "नेह नानास्ति किञ्चन" इत्यादिवाक्यपर्यालोचनात्। सेयमद्वैतविद्या—

सदाशिवसमारम्भां शङ्कराचार्यमध्यमाम्।
अस्मदाचार्यपर्यन्तां वन्दे गुरुपरम्पराम्॥

इति साम्प्रदायिकश्लोकानुसारात् श्रीपरमेश्वरमारभ्य प्रवृत्ता अद्यावध्यविच्छिन्ना दृश्यते। यद्यपि "नारायणं पद्मभुवं वसिष्ठम्" इत्यादिसम्प्रदायश्लोके श्रीमान् नारायणो गुरुपरम्परामूलभूत इति श्रूयते, तथापि न विरोधः, शङ्करनारायणाभेदात्। यद्वा परमेश्वरो वटविटपिसमीपे मौनेन ब्रह्मादीनामुपदिदेश—"गुरोस्तु मौनं व्याख्यानम्" इत्याद्यनुरोधात्। भगवान् नारायणस्तु वचनेनोपदिशतां गुरूणामाद्य इति विरोधपरिहारः।

यस्य देवे परा भक्तिः यथा देवे तथा गुरौ।
तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः॥

इति श्वेताश्वतरश्रुतिर्वेदार्थस्य ब्रह्मणोऽवगमे गुरुभक्तेरावश्यकतां ब्रूते।

भगवान् शङ्कराचार्यो ब्रह्मविद्योपदेष्टुः सदृशपदार्थो लोके नास्त्येव। यतो हि स्पर्शमणिरयः स्वर्णं करोति, न तु स्पर्शम्, येन तत्कृतस्वर्णेनेतरानपि लोहान् स्वर्णरूपेण परावर्तयितुं

शक्येत। ब्रह्मभूतो ब्रह्मविद्योपदेष्टा त्वाचार्यः शिष्यमपि स्वात्मभूतमेव करोति, सोऽपि शिष्योऽन्यानपि स्वशिष्यान् ब्रह्मभूतान् कर्तुं शक्नुयादिति किमु वक्तव्यं गुरुमहिम्नः। अलौकिकः खल्वाचार्यः। यथा हि यूपाहवनीयादयः श्रौतकर्माङ्गभूताः पदार्था न लौकिकाः काष्ठाग्न्यादयः, अपि तु वैदिकहोमादिसंस्कारसाहित्यादलौकिका इति मीमांसकाः संगिरन्ते। तथा ब्रह्मविद्योपदेष्टा गुरुरलौकिकेन ब्रह्मसाक्षात्कारेणालौकिकमहिम्ना च युक्तत्वादलौकिकः, दृष्टान्तैर्बोधयितुमशक्य इत्यभिप्रायः।

अद्वैतविद्याया गुरुपरम्परा श्रीपरमेश्वरम्, श्रीनारायणं वा आरभ्याविच्छिन्ना वर्तत इति प्रदर्शयितुमयं लघुनिबन्धः प्रारभ्यते।

तथाहि भगवान् नारायणो ब्रह्मणे स्वीयतत्त्वमुपदिशति श्रीमद्भागवते—

अहमेवासमेवाग्रे नान्यद् यत् सदसत्परम्।
पश्चादहं यदेतच्च योऽवशिष्येत सोऽस्म्यहम्॥
ऋतेऽर्थं यत् प्रतीयेत न प्रतीयेत चात्मनि।
तद्विद्यादात्मनो मायां यथाऽऽभासो यथा तमः॥ इति।

(श्रीमद्भा० २।९।३२-३३)

अत्रात्मन एव कालत्रयावस्थानम्, द्वैतं तु मायात्मकं विनैवार्थं प्रतीयत इति वदन् अद्वैतसम्प्रदायमेवोपदिशति।

भगवदवतारेष्वपि यत्र यत्र भगवानुपदिशत्यात्मतत्त्वम्, तत्र तत्राद्वैतमेवोपदिशति। तथाहि कपिलावतारे—

ज्ञानमात्रं परं ब्रह्म परमात्मेश्वरः पुमान्।
दृश्यादिभिः पृथग्भावैर्भगवानेक ईयते॥
ज्ञानमेकं पराचीनैरिन्द्रियैर्ब्रह्म निर्गुणम्।
अवभात्यर्थरूपेण भ्रान्त्या शब्दादिधर्मिणा॥ इति।

(श्रीमद्भा० ३।३२।२६,२८)

अत्राद्यश्लोकेन यथा मृदेव घटशरावाद्याकारैरारोपितैर्दृश्यते, तथा आत्मैव दृश्यभेदेनारोपितेन नाना अवगम्यत इत्युक्तम्। द्वितीयश्लोकेन निर्गुणं ब्रह्मैव प्रपञ्चरूपेणावभातीत्युक्तम्। अत्र स्पष्टा अद्वैतप्रक्रिया।

"जीवस्य संसृतीर्बह्वीरविद्याकर्मनिर्मिताः" इति च तत्रैव जीवगतयोऽविद्यानिर्मि-
अपारमार्थिक्य इति स्पष्टीचकार।

यद्यपि मत्स्याद्यवतारेषु भगवता न कस्मैचिदुपदेशः कृतः, तथापि भगवान्
तत्र स्तुत एव। स्तुतिषु च भगवतः पारमार्थिकमद्वैतस्वरूपं प्रपञ्चमिथ्यात्वं च प्रदर्शितं
भगवता तादृशस्तुतेरङ्गीकारादप्रत्याख्यानाच्च स्तुतौ निर्दिष्टा अर्था भगवतोऽनुमता इ
निश्चेतुं शक्यते।

तथाहि मत्स्यावतारे सत्यव्रतो नाम राजा मत्स्यरूपिणं भगवन्तं स्तौति—

अनाद्यविद्योपहतात्मसंविदस्तन्मूलसंसारपरिश्रमातुराः ।
यदृच्छयेहोपसृता यमाप्नुयुर्विमुक्तिदो नः परमो गुरुर्भवान् ॥
( श्रीमद्भा० ८।२४।४६ )

अस्मिन् श्लोकेऽविद्यामूलकः संसार इति वदन्नद्वैतवादं सम्मानयति। न चात्र
विद्यापदेन कर्मोच्यत इति शङ्क्यम्, कर्मणोऽनादित्वाभावात्। न च प्रवाहानादित्वे-
संगतिः, स्वरूपानादित्वे स्पष्टे तदुक्त्ययोगात्।

एवम् "त्वं ह्यात्मा गुरुः" इति तत्प्रकरणगतश्लोके आत्मत्वं भगवत उच्यमान
जीवाभेदं सूचयति।

वराहावतारे सनन्दनादयो वराहरूपिणं महाविष्णुं स्तुवन्ति—

परमार्थस्त्वमेवैको नान्योऽस्ति जगतः पते।
तवैष महिमा येन व्याप्तमेतच्चराचरम् ॥
ज्ञानस्वरूपमखिलं जगदेतदबुद्धयः।
अर्थस्वरूपं पश्यन्तो भ्राम्यन्ते मोहसंप्लवे ॥
( वि० पु० १।४।३७-४० )

अत्र प्रथमश्लोकेन ब्रह्मण एव परमार्थत्वोक्त्या जगतो मिथ्यात्वं प्रतीयते। द्वितीयेन
यथा मृदा निर्मितानां घटशरावादीनां मृद्रूपेण पश्यन् परमार्थदर्शी विकारान् मृद्भिन्नान्
पश्यन् भ्रान्तस्तद्वद् जगदेतद् ज्ञानरूपब्रह्मात्मना पश्यन् तत्त्वदर्शी जगद्रूपेण पश्यन् भ्रान्त
इत्युक्तेरद्वैतानुरोधः स्पष्टः।

नृसिंहावतारे प्रह्लादस्तुतौ विष्णुपुराणे—

ओं नमो वासुदेवाय तस्मै भगवते सदा।
व्यतिरिक्तं न यस्यास्ति व्यतिरिक्तोऽखिलस्य यः॥
अहमेवाक्षयो नित्यः परमात्माऽऽत्मसंश्रयः।
ब्रह्मसंज्ञोऽहमेवाग्रे तथान्ते च परः पुमान्॥

(१।१९।७७,८६)

अत्र प्रथमश्लोकेन प्रपञ्चमिथ्यात्वं द्वितीयेन जीवब्रह्माभेदश्च स्पष्टं प्रतिपाद्येते। श्रीरामावतारे भगवान् लक्ष्मणायोपदिशति ब्रह्माद्वैतम्। तथाह्यध्यात्मरामायणे—

आचार्यशास्त्रोपदेशादैक्यज्ञानं यदा भवेत्।
आत्मनोर्जीवपरयोर्मूलाविद्या तदैव हि॥
श्रीयते कार्यकरणैः सहैव परमात्मनि।
साऽवस्था मुक्तिरित्युक्ता ह्युपचारोऽयमात्मनि॥

(अध्यात्मरामा०)

अत्र जीवब्रह्मैक्यज्ञानस्य मोक्षसाधनत्वं स्पष्टमुक्तं भगवता। श्रीरामश्च—"आत्मानं मानुषं मन्ये रामं दशरथात्मजम्" इति महादेवसमीपे वदन् सर्वस्यापि जीवस्य शरीरात्म-भ्रान्त्यैव जीवत्वमिति मन्यते। महादेवोपदेशाद् रामस्य स्वीयनिजरूपप्रत्यभिज्ञावदाचार्यो-पदेशात् स्वतत्त्वज्ञानोत्पत्तिरित्येतदप्याविष्कृतं तत्र भगवता वाल्मीकिना।

श्रीकृष्णावतारे भगवता अर्जुनाय कृतो भगवद्गीतोपदेशः, अनुगीतोपदेशश्च परमा-द्वैतं ख्यापयता भगवद्गीतायां तावत्—"क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत" इति जीवपरैक्योपदेशः।

मत्स्थानि सर्वभूतानि न चाहं तेष्ववस्थितः।
न च मत्स्थानि भूतानि पश्य मे योगमैश्वरम्॥

इति च प्रपञ्चमिथ्यात्वमुपदिदेश। अनुगीतासु च—

जीवो निष्क्रान्तमात्मानं शरीरात् संप्रपश्यति।
स तमुत्सृज्य देहं स्वं धारयन् ब्रह्म केवलम्॥
आत्मानमालोकयति मनसा, प्रहसन्निव।

(म० भा० १४।१९।५०)

इत्यत्र शरीरादिभ्यो भिन्नत्वेनात्मानं निकृष्य तं ब्रह्मरूपेण ज्ञात्वा मुच्यत इ ब्रवीति ।

एवम्—

परावरज्ञो भूतानां विधिज्ञः सर्वकर्मणाम् ।
सर्वभूतात्मभूतात्मा गच्छत्यात्मानमव्ययम् ॥

( म० भा० ४।५०।५६ )

इत्यादयोऽपि प्रदर्शनीयाः ।

सदाशिवस्य श्रीदक्षिणामूर्त्याख्यस्य परमगुरुत्वं प्रसिद्धमेव । "ईशानः सर्वविद्या-नाम्" इति श्रुतिः परमेश्वरस्य विद्यागुरुत्वमञ्जसा प्रदर्शयति । "रुद्र यत्ते दक्षिणं मुखं तेन मां पाहि नित्यम्" इति च श्वेताश्वतरश्रुतिरप्यत्रोदाहार्या ।

चित्रं वटतरोर्मूले वृद्धाश्शिष्या गुरुर्युवा ।
गुरोस्तु मौनं व्याख्यानं शिष्यास्तु छिन्नसंशयाः ॥

इति श्लोकश्चेममर्थं स्पष्टीकरोति ।

श्रीशिवश्च स्वयं शुकरहस्योपनिषदि शुकाय उपनिषत्सु प्रधानभूतानि महावाक्या-न्युपदिश्य तदर्थं जीवब्रह्माभेदं प्राकाशयत् ।

एवं तेजोबिन्दूपनिषदि कुमारं प्रति शिवः—

अहं त्वञ्चैव चिन्मात्रं मूर्तामूर्तादिचिन्मयम् ।
पुण्यं पापं च चिन्मात्रं जीवश्चिन्मात्रविग्रहः ॥

इत्यादिरीत्योपदिशन् ब्रह्मचैतन्यं सत्यम्, प्रपञ्चो मिथ्येति सिद्धान्तं सूचयति ।

ब्रह्मापि ब्रह्मविद्यागुरुः स्मृतः । स च महाभारते, अनुगीतास्वद्वैततत्त्वमेवो-पदिशति । यथा—

"तस्मादलिङ्गः क्षेत्रज्ञः केवलं ज्ञानलक्षणः ।"

इति जीवस्य केवलज्ञानरूपतां वक्ति ।

तस्माद् गुणांश्च सत्त्वं च परित्यज्येह धर्मवित् ।
क्षीणदोषो गुणातीतः क्षेत्रज्ञं प्रविशत्यथ ॥

इति मोक्षकाले जीवः क्षेत्रज्ञं प्रविशतीत्युक्त्वा स क्षेत्रज्ञः परमात्मैवेत्याह—

अचलश्चानिकेतश्च क्षेत्रज्ञः स परो विभुः । इति ।

अपि च शान्तिपर्वणि रुद्रं प्रति ब्रह्मा ब्रवीति—

बहूनां पुरुषाणां हि यत्रैका योनिरुच्यते ।
तथा तं पुरुषं विश्वं परमं सुमहत्तमम् ॥
निर्गुणं निर्गुणा भूत्वा प्रविशन्ति सनातनम् ।
तत्र यः परमात्मा हि स नित्यो निर्गुणः स्मृतः॥

इति जीवपरयोरुभयोः परमार्थतो निर्गुणत्वं मोक्षकालेऽभेदप्राप्तिं च सूचयति ।

ततो **वसिष्ठः** । वसिष्ठस्याद्वैतविद्योपदेशो योगवासिष्ठे विस्तरेणोपलभ्यते । तथाहि—

यथा वन्ध्यासुतो नास्ति यथा नास्ति मरौ जलम् ।
यथा नास्ति नभोयक्षस्तथा नास्ति जगद्भ्रमः ॥
यदिदं दृश्यते राम तद्ब्रह्मैव निरामयम् ।

इति "ब्रह्म सत्यं जगन्मिथ्या" इति सिद्धान्तं स्पष्टमाह ।

अपि च महाभारते वसिष्ठो जनकं प्रति साङ्ख्यं ज्ञानमुपदिशति । तत्र परस्यात्मनो निर्गुणत्वमाह—

गुणा गुणवतः सन्ति निर्गुणस्य कुतो गुणाः ।
निर्गुणं चेश्वरं नित्यमधिष्ठातारमेव च ॥ इति ।

प्रपञ्चमिथ्यात्वञ्च—

पञ्चविंशतिनिष्ठोऽयं यदा सम्पत् प्रवर्तते ।
एकत्वं दर्शनं चास्य नानात्वं चाप्यदर्शनम् ॥
तत्त्वनिस्तत्त्वयोरेतत् पृथगेव निदर्शनम् ।

इत्यादिना प्रदर्शयति ।

वसिष्ठपुत्रः शक्तिर्ब्रह्मविदपि प्रथमवयस्येव ममारेति तस्योपदेशो दुर्लभः ।

ततः **पराशरः** । स च विष्णुपुराणे बहुधाऽद्वैततत्त्वं विस्तरेणोपदिशति । तथाहि—

महीघटत्वं घटतः कपालिका
कपालिकाचूर्णरजस्ततोऽणुः ।
जनैः स्वकर्मस्तिमितात्मनिश्चयै-
रालक्ष्यते ब्रूहि किमत्र वस्तु ॥

इति श्लोके मृत्कार्यं सर्वं मृद्व्यतिरेकेण नास्तीति दृष्टान्तं विवृत्य—

तस्मान्न विज्ञानमृतेऽस्ति किञ्चित्
क्वचित् कदाचिद् द्विज वस्तुजातम् ।

विज्ञानमेकं निजकर्मभेद-
विभिन्नचित्तैर्बहुधाभ्युपेतम् ॥
ज्ञानं विशुद्धं विमलं विशोक-
मशेषलोभादि - निरस्तसङ्गम् ।
एकं सदैकं परमः परेशः
स वासुदेवो न यतोऽन्यदस्ति ॥
सद्भाव एवं भवतो मयोक्तो
ज्ञानं यथा सत्यमसत्यमन्यत् ।
एतत्तु सत्यं व्यवहारभूतं
तत्रापि चोक्तं भुवनाश्रितं ते ॥

इत्यादिश्लोकेषु ब्रह्मरूपज्ञानस्य नित्यत्वं निर्गुणत्वं, प्रपञ्चस्य व्यावहारिकसत्यत्वं च स्पष्टमाह ।

पराशरानन्तरं व्यासः

भगवतो व्यासस्य वचनानि सुबहूनि मोक्षधर्मेऽद्वैतसिद्धान्तानुरोधीनि दृश्यन्ते । तथाहि—

सर्वभूतेषु चात्मानं सर्वभूतानि चात्मनि ।
यदा पश्यति भूतात्मा ब्रह्म संपद्यते तदा ॥

इति सर्वात्मभावमुपदिश्य तादृशज्ञानवतो लोकान्तरगमनादिकं विना इहैव मोक्षं दर्शयति—

सर्वभूतात्मभूतस्य सम्यग् भूतानि पश्यतः ।
देवाश्च मार्गे मुह्यन्ति ह्यपदस्य पदैषिणः ॥

इति श्लोकेन ।

व्यासविरचितेषु ब्रह्मसूत्रेष्वद्वैततात्पर्यं बहुधा श्रूयते । तथाहि मोक्षस्वरूपं वदन् सूत्रकारः—"संपद्याविर्भावः स्वेन शब्दात्, अविभागेन दृष्टत्वात्, आत्माप्रकरणात्, चितितन्मात्रेण तदात्मकत्वात्" इति सूत्रैर्ज्ञानिनो मोक्षः स्वरूपाविर्भाव एव । स च चिद्रूप इति ब्रह्माभेदेनेति च सुस्पष्टमुवाच । एतेनात्मनो लोकान्तरप्राप्तिमुक्तिरिति पक्षः

सूत्रकारानभिमत इति सूचितम्। मार्गपादप्रोक्तगतिस्त्वर्वाक्तनमोक्षायेत्यपि सूच्यते। आविर्भावकथनात् पूर्वमपि ब्रह्मैव सन् जीवोऽविद्यया पररूपमिवापन्नो विद्यया ब्रह्मरूपेणाविर्भवतीति सूचयति।

अपि च "कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा" इत्यधिकरणे ब्रह्मपरिणामवादं "परास्य प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्" इति ब्रह्मणो जगत्प्रकृतित्वं वदतः सूत्रकृतो विवर्तवाद एव तात्पर्यं गम्यते। आरम्भवादस्य सूत्रकृतैव 'महद्दीर्घवद्वा' इत्यधिकरणे निरस्तत्वात्। अत एव सूत्रम्—"आत्मनि चैवं विचित्राश्च हि" इति। अत्र हि सुप्तजीवस्य स्वप्नकाले दृश्यमानं रथादिकं जीवस्वरूपानुपमर्देन जीवे दृश्यमानं यथा मिथ्या, तथा ब्रह्मस्वरूपानुपमर्देन ब्रह्मणि दृश्यमानं जगदपि मिथ्येत्यर्थे तात्पर्यवत्।

अपि च "तदनन्यत्वमारम्भणशब्दादिभ्यः" इति सूत्रं प्रपञ्चमिथ्यात्वं दृढीकरोति। आरम्भणशब्दात् "यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्याद्वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्" इति श्रुतिरुपस्थाप्यते। अस्य हि दृष्टान्तस्य घटस्य मिथ्यात्वमेवार्थः, मृत्तिकेत्येवेत्येवकारात्। तत्र 'इति'शब्दो मृत्तिकाप्रकारेणेत्यर्थे। यद्वा मृत्तिकादि सत्यमित्यर्थः। घटापेक्षया मृत्तिका सत्या, तदपेक्षया तदुपादानं जलं सत्यम्। एवं परंपरया ब्रह्मैव सत्यमित्यर्थः स्वरसः। मृत्पिण्डज्ञानेन सर्वमृद्विकारज्ञानं च सर्वेषां मृद्विकाराणां कारणरूपेण ज्ञानमभिप्रेतम्। तत्तद्रूपेण ज्ञानं तु भ्रान्तिरेव। अत एव 'वाचारम्भणं विकारो नामधेयमेव, न वस्त्वस्ति' इत्युक्तम। तथा चात्र तदनन्यत्वम् = तद्व्यतिरेकेणाभाव इत्यर्थः।

"शास्त्रदृष्ट्या तूपदेशो वामदेववत्" इति सूत्रे शास्त्रदृष्टिपदेन सर्वैस्तत्त्वमस्यादिशास्त्रजन्यज्ञानमेव स्वीक्रियते। तच्च शास्त्रं स्वरसतया जीवब्रह्माभेदमेव बोधयति। एतच्च पूर्ववाक्ये 'अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरोत्' इति ब्रह्मणो जीवरूपेण प्रवेशेन दृढीक्रियते। जीवरूपेण प्रविष्टं हि ब्रह्म, तदेव च जीवः स्वात्मना पश्यन् मुक्तिं व्रजति। अपि चास्याध्यायस्यान्त्ये खण्डे—"मिथ्याभिसन्धो बध्यते, सत्याभिसन्धस्तु मुच्यते" इत्युक्त्वा तत्त्वमसीत्युपदेशः कृतः, तेन सत्यब्रह्माभिसन्धो मुच्यते, शरीरादिमिथ्यावस्त्वभिमानी बध्यत इति दृष्टान्तसामञ्जस्यं प्रपञ्चमिथ्यात्वे जीवब्रह्माभेदे च सङ्गच्छते। यदि तेन 'त्वमसि तस्मै त्वमसि' इत्यादिरूपेण महावाक्यार्थो वर्ण्येत, तदा बन्धस्य मिथ्यात्वम् 'अनृताभिसंबन्धो हन्यते' इति वाक्यसूचितं कथमुपपद्येत ? अपि चास्मिन्नेवाध्याये आदौ "मृत्तिकेत्येव सत्यम्"

इत्युपदेशे एवकारेण घटशरावादीनां मृत्कार्याणामनृतत्वं सूच्यते। इदमेव चाध्यायान्ते सतो ब्रह्मणः सत्यत्वं बन्धस्यानृतत्वं च ब्रुवता उद्दालकेनानूदितमिति गम्यते "सत्याभिसन्धः", "अनृताभिसन्धः" इति ब्रुवता। तथा च तत्त्वमस्यादिवाक्यस्य महावाक्यत्वेन प्रसिद्धस्य शास्त्रत्वोक्त्या तदर्थ एव संपूर्णशास्त्रार्थ इति ज्ञाप्यते। अत एव "महावाक्यभिन्नान्युपनिषद्वाक्यानि फलवत्सन्निधावफलं तदङ्गम्" इति न्यायेन मोक्षफलकमहावाक्याङ्गानीति सिद्धं भवति।

अपि च "असम्भवस्तु सतोऽनुपपत्तेः" इति सूत्रे ब्रह्मणः सत्त्वेन व्यवहरणात्, "सत्यं ज्ञानमनन्तं ब्रह्म" इति च ब्रह्मणः सत्यत्वं लक्षणमित्युक्तेश्च ब्रह्मव्यतिरिक्तं सर्वमसदसत्यमिति च सूच्यते। तच्चासत्त्वं सद्भिन्नत्वम्, न तु तुच्छत्वमिति ज्ञेयम्।

अपि च "यावद्विकारं तु विभागो लोकवत्" इति सूत्रम् 'यत्र यत्र विभक्तत्वं तत्र तत्र विकारत्वम्' इति व्याप्तिसूचनद्वारा अविकारे ब्रह्मण्यविभागं सूत्रयद् ब्रह्मण्यद्वैतभावं व्यनक्ति।

अपि च "अरूपवदेव हि तत्प्रधानत्वात्" इति सूत्रं ब्रह्मणो निर्विशेषत्वं प्रदर्शयति। न भेदादिति चेन्न, "प्रत्येकमतद्वचनात्" इति सूत्रं जीवेश्वरभेदमाशङ्क्य यश्चायमस्यां पृथिव्यां तेजोमयः, अमृतमयः, यश्चायमध्यात्मं तेजोमयः, अमृतमयः पुरुषोऽयमेव स इति सर्वपर्यायेष्वाध्यात्मिकोपाधिपरिच्छिन्नजीवस्याधिदैविकेन ब्रह्मणाऽभेदं दर्शयति। मोक्षकाले च जीवस्यात्रैव स्वस्वरूपाभिव्यक्तिरेव, न तु देशान्तरप्राप्तिरिति प्रतिषेधादिति चेन्न, "शारीरात् स्पष्टो ह्येकेषां सम्पद्याविर्भावः स्वेन शब्दात्" इति सूत्रैर्निर्णीतम्।

याज्ञवल्क्योऽप्याचार्योऽद्वैतमेव स्पष्टमाह। तथाहि याज्ञवल्क्यस्मृतौ प्रायश्चित्ताध्याये भगवान् याज्ञवल्क्यः सर्वशरीरेष्वात्मैकत्वमुक्त्वा उपाधिभेदेन तस्य भेदप्रतीतिरित्याह—

आकाशमेकं हि यथा घटादिषु पृथग् भवेत्।
तथात्मैको ह्यनेकश्च जलाधारेष्विवांशुमान्॥ इति।

(३।१४४)

ब्रह्मैव जीवरूपेण संसरति, न तु जीवादत्यन्तं भिन्नं ब्रह्मेति सिद्धान्तमनुवदन् प्रश्नमुत्थापयति—

यद्येवं स कथं ब्रह्मन् पापयोनिषु जायते।
ईश्वरः स कथं भावैरनिष्टैः सम्प्रयुज्यते॥ इति।

अत्र स्पष्टं जीवेश्वराभेदः सूच्यते । समाधानमपि—

"दोषैः प्रयाति जीवोऽयं भवं योनिशतेषु च ।"

इत्यविद्याकायकर्मभिरेव तस्य जीवभाव इति सिद्धान्तं द्रढयति ।

मनुरपि—

सर्वभूतेषु चात्मानं सर्वभूतानि चात्मनि ।
समं पश्यन्नात्मयाजी स्वाराज्यमधिगच्छति ॥

इत्याह ।

अयमर्थः—सर्वभूतेषु = स्थावरजङ्गमात्मकेषु, अहमेवात्मत्वेन वर्त इति, सर्वाणि स्थावरजङ्गमात्मकानि भूतानि मदुपादानकत्वेन मय्येव त्रिषु कालेषु वर्तन्त इति ज्ञानात् स्वाराज्यं स्वप्रकाशब्रह्मात्मनाऽवस्थानं लभत इति ।

आपस्तम्बाचार्योऽपि—"आत्मलाभान्न परं विद्यते" इति सूत्रेणात्मलाभस्य परमप्रयोजनत्वमाह । आत्मनो नित्यलब्धत्वात् तल्लाभोऽज्ञाननिवृत्तिरेव । आत्मनः स्वप्रकाशपरमानन्दरूपत्वेऽपि शरीरादावात्मभ्रमेण दुःखादिकं जायते । आत्मज्ञानेन तद्भ्रमकारणाज्ञाननिवृत्तावात्मा स्वरूपेण लब्ध इव विस्मृतकण्ठगतचामीकरलाभवत्—इति अद्वैतवादं स्वहस्तयति ।

एवम् "आत्मनि पश्यन् सर्वभूतानि न मुह्येच्चिन्तयन् कविः । आत्मानं चैव सर्वत्र यः पश्येत् स वै ब्रह्मा नाकपृष्ठे विराजति" इति सूत्रमप्युदाहार्यम् ।

दत्तात्रेयोऽपि—अलर्कं प्रति ज्ञानमुपदिशन्नुवाच मार्कण्डेयपुराणे—

ज्ञानपूर्वो वियोगो योऽज्ञानेन सह योगिनः ।
सा मुक्तिर्ब्रह्मणा चैक्यमनैक्यं प्राकृतैर्गुणैः ॥ इति ।

( मा० पु० ३१ )

अज्ञानेन जीवपृथग्भावः, वस्तुतो ब्रह्मैव जीव इति च । एवम्—

यथाग्निरग्नौ संक्षिप्तः समानत्वमनुव्रजेत् ।
तदाख्यस्तन्मयो भूतो न गृह्येत विशेषतः ॥
परेण ब्रह्मणा तद्वत् प्राप्यैक्यं दग्धकिल्विषः ।
योगी याति पृथग्भावं न कदाचिन्महीपते ॥

इत्याद्याः श्लोका दत्तात्रेयप्रोक्ता उदाहार्याः ।

ऋभुरपि

सितनीलादिभेदेन यथैकं दृश्यते नभः ।
भ्रान्तिदृष्टिभिरात्मापि तथैकस्सत् पृथक् पृथक् ॥
एकस्समस्तं यदिहास्ति किञ्चित्
तदच्युतो नास्ति परं ततोऽन्यत् ।
सोऽहं स च त्वं स च सर्वमेत-
दात्मस्वरूपं त्यज भेदमोहम् ॥
( वि० पु० २।२६।२२-२३ )

सनकादयोऽपि ब्रह्मविद्याचार्याः

तत्र सनत्सुजातो धृतराष्ट्रं प्रत्यात्मतत्त्वमुपदिशन् ब्रवीति—

अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा
लिङ्गस्य योगेन स याति नित्यम् ।
तमीशमीड्यमनुकल्पमाद्यं
पश्यन्ति मूढा न विराजमानम् ॥

इत्यङ्गुष्ठमात्रस्य जीवस्य ब्रह्मतामाह ( म० भा० ५।४६।१५ ) ।
स एव चान्ते—

अहमेव स्मृतो माता पिता पुत्रोऽस्म्यहं पुनः ।
आत्माहमपि सर्वस्य यच्च नास्ति यदस्ति च ॥
पितामहोऽस्मि स्थविरः पिता पुत्रश्च भारत ।
ममैव यूयमात्मस्था न मे यूयं न वो वयम् ॥
आत्मैव स्थानं मम जन्म चात्मा
ओतप्रोतोऽहमजरप्रतिष्ठः ।
अजश्चरो दिवारात्रमतन्द्रितोऽहं
मां विज्ञाय कविरास्ते प्रसन्नः ॥

इति श्लोकैः स्वस्य सर्वात्मभावम् "अहं मनुरभवं सूर्यश्च" इत्यादिश्रुतिप्रसिद्ध
स्पष्टं ब्रवीतीति सिद्धमस्याद्वैताचार्यत्वम् ।

जडभरतोऽप्यद्वैताचार्यः। स च विष्णुपुराणे रहूगणमहाराजं प्रति तत्त्वमुपदिशन्नुवाच—

> परमार्थस्तु भूपाल संक्षेपाच्छ्रूयतां मम।
> एको व्यापी समः शुद्धो निर्गुणः प्रकृतेः परः॥
> जन्मवृद्ध्यादिरहित आत्मा सर्वगतोऽव्ययः।
> परज्ञानमयोऽसद्भिर्नामजात्यादिभिर्विभुः।
> न योगवान्न युक्तोऽभूद् नैव पार्थिव योक्ष्यते॥
> तस्यात्मपरदेहेषु सतोऽप्येकमयं हि यत्।
> विज्ञानं परमार्थोऽसौ द्वैतिनोऽतथ्यदर्शिनः॥

इति द्वैतमिथ्यात्वं ब्रह्मसत्यत्वं च कण्ठरवेण। एवं केशिध्वजाख्यो नृपः खाण्डिक्यं प्रत्यद्वैतात्मस्वरूपमुपदिदेशेति श्रूयते विष्णुपुराणे ( ६-७ )।

तथाहि केशिध्वज उवाच—

> अनात्मन्यात्मबुद्धिर्या चास्वे स्वमिति या मतिः।
> संसारतरुसंभूतिबीजमेतद् द्विधा स्थितम्॥

इति मूलाविद्या अहङ्कारममकारभेदेन स्थित्वा संसारकारणं भवतीत्युक्त्वा—

> निर्वाणमय एवायमात्मा ज्ञानमयोऽमलः।
> दुःखाज्ञानमया धर्माः प्रकृतेस्ते न चात्मनः॥
> ( वि० पुरा० )

इत्यात्मनः शुद्धत्वं ब्रवीति। पुनश्च—

> विषयेभ्यस्समाहृत्य विज्ञानात्मा मनो मुनिः।
> चिन्तयेन्मुक्तये तेन ब्रह्मभूतं परेश्वरम्॥
> आत्मभावं नयत्येनं तद्ब्रह्मध्यायिनं मुनिम्।
> आत्मप्रयत्नसापेक्षा विशिष्टा या मनोगतिः॥
> तस्या ब्रह्मणि संयोगो योग इत्यभिधीयते।

इति जीवस्य ब्रह्मभाव एव मोक्ष इत्याह।

विभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते ।
आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति ॥

इति भेदस्याज्ञानमूलत्वं जीवब्रह्मणोर्वास्तवाभेदं च निरधारि ।

## शुकाचार्या अपि

श्रीमद्भागवते शुकप्रोक्तत्वेन सूत आह—

अनाद्यविद्यया विष्णोरात्मनः सर्वदेहिनाम् ।
निर्मितो लोकतन्त्रोऽयं लोकेषु परिवर्तते ॥ इति ।

अत्र प्रपञ्चस्याविद्यकत्वेन मिथ्यात्वं स्पष्टमुक्तम्, शुकस्याद्वैतवादसम्मतां सर्वात्म भावरूपां गतिं वर्णयति महाभारतम्—

शुकस्तु मारुताच्छीघ्रां गतिं कृत्वाऽन्तरिक्षगः ।
दर्शयित्वा प्रभावं स्वं सर्वभूतगतोऽभवत् ॥
ततः शुकेति दीर्घेण स्वरेणाक्रन्दितस्तदा ।
स्वयं पित्रा स्वरेणोच्चैस्त्रीन् लोकाननुनाद्य वै ॥
शुकः सर्वगतो भूत्वा सर्वात्मा सर्वतोमुखः ।
प्रत्यभाषत धर्मात्मा भोः शब्देनानुनादयन् ॥

इत्यादिना शान्तिपर्वणि ।

## गौडपादाचार्याः

इमे गौडदेशे समुत्पन्ना इत्येतदेव नाम्ना ज्ञायते, नामविशेषादिकं तु न ज्ञायते परन्त्विमे श्रीशङ्कराचार्याणां परमगुरवः । एतत् तु न केवलं परम्परया जानीमः, अपि त्वेत नुद्दिश्य श्रीशङ्कराचार्यप्रणीते "परमगुरुममुं पादपातैर्नतोऽस्मि" इति श्लोके व्यक्तमे परमगुरुपदप्रयोगाज्जानीमः । एतत्कृतग्रन्थेषु सांख्यकारिकाटीकादिषु प्रधानभूता माण्डूक्य कारिका । तत्र प्रकरणचतुष्टयम् । आद्यमागमप्रकरणत्वेन प्रसिद्धं श्रुत्यर्थविवरण कारिकाजातम् । आगमप्रकरणं च श्रुतिमेव मन्यन्ते केचन वैदिका अपि ।

द्वितीयप्रकरणं तु वैतथ्यसंज्ञितं माण्डूक्योपनिषदि 'अद्वैतं चतुर्थं मन्यन्ते' इत्य 'अद्वैत'पदेन सूचितम्,

प्रपञ्चो यदि विद्येत निवर्तेत न संशयः।
मायामात्रमिदं द्वैतमद्वैतं परमार्थतः॥

इति कारिकया विवृतं च यत् प्रपञ्चमिथ्यात्वम् तद् युक्तिभिः समर्थनार्थमारब्धम्। 'अद्वैत'पदेन द्वैताभावोपलक्षितार्थकेन द्वयं सूचितम्—प्रपञ्चमिथ्यात्वम्, अधिष्ठानसत्यत्वं च। तत्राद्यस्य विवरणं वैतथ्यप्रकरणेन कृत्वा द्वितीयविवरणमद्वैतप्रकरणेन क्रियते। चतुर्थेन अलातसदृशानां चञ्चलानां परमतानां शान्तिं कुर्वता अलातशान्तिप्रकरणेन परस्परविरुद्धानाम्, अद्वैतविरुद्धमतानां निराकरणमेव क्रियते।

एते च गौडपादाश्चतुर्थप्रकरणादौ—

ज्ञानेनाकाशकल्पेन धर्मान् यो गगनोपमान्।
ज्ञेयाभिन्नेन संबुद्धस्तं वन्दे द्विपदां वरम्॥

इति कारिकया कञ्चिन्नरश्रेष्ठं प्रणमन्ति। अयं नरश्रेष्ठः श्रीमान्नारायण एवेत्यानन्दगिरिपादा लिखन्ति–'आचार्यो हि पुरा बदरिकाश्रमे नरनारायणाधिष्ठिते नारायणं भगवन्तमभिप्रेत्य तपो महदतप्यत। ततो भगवानतिप्रसन्नस्तस्मै विद्यामदादिति प्रसिद्धम्।' इति।

एतेन बहुप्रमाणविरोधाद् श्रीविधुशेखरभट्टाचार्याद्युक्तं गौडपादा बौद्धमतावलम्बिन इत्येतदविचारितरमणीयमिति सिद्धम्।

## द्रविडाचार्याः

इमेऽपि श्रीशङ्कराचार्यात् प्राक्कालीना अद्वैतसम्प्रदायप्रवर्तकाः। एतैर्ब्रह्मनन्दिना कृतस्य छान्दोग्योपनिषदर्थसंग्राहकस्य वाक्यनामकग्रन्थस्य व्याख्या रचितेति श्रूयते। श्रीशङ्कराचार्या इमान् बहुषु स्थलेषूदाहरन्ति। तथाहि बृहदारण्यकोपनिषद्भाष्ये द्वितीयाध्यायप्रथमब्राह्मणविवरणे द्रविडाचार्यान् प्रमाणयन्ति श्रीशङ्कराचार्याः—"अत्र च सम्प्रदायविद आख्यायिकां सम्प्रचक्षते। कश्चित् किल राजपुत्रो जातमात्र एव मातापितृभ्यामपविद्धो व्याधगृहे संवर्धितः। सोऽमुष्य वंश्यतामजानन् व्याधजातिप्रत्ययो व्याधजातिकर्माण्येवानुवर्तते, न राजास्मीति। यदा पुनः कश्चित् परमकारुणिको राजपुत्रस्य राजश्रीप्राप्तियोग्यतां जानन्नमुष्य पुत्रतां बोधयति—'न त्वं व्याधः, अमुष्य राज्ञः पुत्रः, कथञ्चिद् व्याधगृहमनुप्रविष्टः' इति। स एवं बोधितस्त्यक्त्वा व्याधजातिप्रत्ययकर्माणि पितृपैतामहीमात्मनः पदवीमनुवर्तते, राजाहमिति। तथा किलायं परस्मादग्निविस्फुलिङ्गवत् तज्जातिरेव विभक्तः। इह देहेन्द्रियादिगहने प्रविष्टोऽसंसारी सन् देहेन्द्रियादिसंसारधर्ममनुवर्तते परमात्मतामजान-

न्नात्मनः । आचार्येण 'न त्वमेवमात्मकः परमेव ब्रह्मासि, असंसारीति बोधितो हित्वैषणा-त्रयानुवृत्तिं ब्रह्मैवास्मीति प्रतिपद्यते' इति ।

अत्र संप्रदायविदो द्रविडाचार्या इति श्री-आनन्दगिरिभिष्टीकाकारैरभ्यधायि । तोटकाचार्यैरपि स्वीये श्रुतिसारसमुद्धरणे एवमुक्तम्—

द्रविडोऽपि च तत्त्वमसीति वचो विनिवर्तकमेव निरूपितवान् ।
शबरेण विवर्धित-राजशिशोर्निजजन्मविदुक्तिनिदर्शनतः ॥
( श्लो० २०६ )

इति वदन्त इमे पूर्वोक्ताचार्या द्रविडाचार्या इति सूचयति ।

तथा योगवासिष्ठटीकाकारैर्द्रविडाचार्यवाक्यमुदाहृतम्—"यद्यप्रमेयं ब्रह्म किमर्थं शास्त्रमिति चेत् , सिद्धं तु निवर्तकत्वात्" इति।

एतेन द्रविडाचार्या अद्वैतसम्प्रदायानुसारिण इति स्पष्टमेव ।

ब्रह्मनन्दीनामानः छान्दोग्यवाक्यकारा अद्वैतसम्प्रदायमेवोपोद्बलयन्ति । तथाहि—एतेषां ग्रन्थात् कल्पतरुकारैः कानिचिद्वाक्यान्युदाहृतानि, यान्यद्वैतसिद्धान्तगतं विवर्तवादं स्पष्टमेव स्वहस्तयन्ति । तथाहि "आत्मकृतेः परिणामात्" इति सूत्रे कल्पतरुग्रन्थे दृश्यते—"नासतोऽनिष्पाद्यत्वात् । प्रवृत्त्यानर्थक्यं तु सत्त्वाविशेषात्" इति पूर्वपक्षयित्वा आह "न, संव्यवहारमात्रत्वात्" इति । एतेनेमे विवर्तवादिन इति सूचितम् ।

आचार्यसुन्दरपाण्ड्योऽप्यद्वैतपरब्रह्मसूत्रव्याख्याप्रणेता इति तद्ग्रन्थादुद्धृतवाक्येभ्योऽवगम्यते । तथाहि श्रीशङ्कराचार्यैः समन्वयसूत्रभाष्यान्ते अपि चाहुः" इति कृत्वोक्तम्—

गौणमिथ्यात्मनोऽसत्त्वे पुत्रदेहादिबाधनात् ।
सद्ब्रह्मात्माहमित्येवं बोधे कार्यं कथं भवेत् ॥
अन्वेष्टव्यात्मविज्ञानात् प्राक् प्रमातृत्वमात्मनः ।
अन्विष्टः स्यात् प्रमातैव पाप्मदोषादिवर्जितः ॥
देहात्मप्रत्ययो यद्वत् प्रमाणत्वेन कल्पितः ।
लौकिकं तद्वदेवेदं प्रमाणं त्वात्मनिश्चयात् ॥ इति ।

अत्र ज्ञाने सति कर्मनिवृत्तिः, देहसंबन्धिप्रत्ययानां व्यावहारिकत्वमित्यादयो विषया अद्वैतवादिन इमे इति सूचयन्ति । एते श्लोका आचार्यसुन्दरपाण्ड्यग्रन्थादुद्धृता इति सूत-संहिताटीकायां माधवाचार्याः, पञ्चपादिकाटीकायामात्मस्वरूपाचार्याश्च वदन्ति ।

एतेषां त्रयाणामाचार्याणां ग्रन्थाः सम्पूर्णं नोपलभ्यन्ते। उदाहृतवाक्यबलात् तु ते प्राचीना अद्वैताचार्या इति निर्धार्यते।

## आचार्यमण्डनमिश्राः

एते श्रीशङ्कराचायसमकालिकाः, तदीयभाष्यादिकं दृष्ट्वैव स्वयं ब्रह्मसिद्धिनामकं ग्रन्थं विरचितवन्त इति तद्ग्रन्थद्रष्टॄणां स्पष्टं भासते। यद्यप्येतेऽद्वैतवादिन एव, तथापि केषुचिद्विषयेषु ब्रह्माद्वैतप्रपञ्चमिथ्यात्वाद्यविरुद्धेषु भिन्नाभिप्रायं प्रकटयन्ति। तथाहि–एते भर्तृहर्याद्यभिमतं शब्दाद्वैतमभ्युपगम्य तदेव चैतन्यात्मकं ब्रह्मेत्याचक्षते, "ओमिति ब्रह्म" इति श्रुतेः। अपि नैतेषामनिर्वचनीयख्यातौ नादरः, अन्यथाख्यातिमेव च समर्थयन्ते। अपि च शब्दाद् ब्रह्मज्ञानानन्तरमपि ध्यानं प्रसंख्यानापरपर्यायं साक्षात्कारे हेतुं ब्रुवते। अपि च तत्काले यज्ञादिकर्मानुष्ठानमपीच्छन्ति शीघ्रमेव ब्रह्मज्ञानप्राप्तये, जीवन्मुक्तिं च खण्डयन्ति। भावाद्वैतमिच्छन्ति, अभावं पृथगभ्युपगच्छन्तः। एवं व्यावहारिकेषु केषुचिद्विषयेषु विसंवादेऽप्यद्वैताचार्येषु प्रधानभूता एत इत्यत्र न विवादः।

## हरदत्ताचार्याः

आपस्तम्बगौतमादिधर्मसूत्राणामेते व्याख्यातारः श्रीशङ्कराचार्यादिप्राचार्योक्तप्रकार-विलक्षणेन प्रकारेणाद्वैतं समर्थयन्ते। तथाहि, स्वीये आपस्तम्बधर्मसूत्रव्याख्याने उज्ज्वलाभिधे- "स्वच्छोऽप्यात्मा प्रकृत्या सहाभेदमापन्नस्तद्धर्मा भवति। एवं तद्विकारेण महता इत्याशरीराद् द्रष्टव्यम्, स्थूलोऽहम्, कृशोहम्, देवोऽहम्, मनुष्योऽहम्, तिर्यगहमिति। तस्यैवंगतस्या-पेक्षितः स्वरूपलाभो नीचैरिव वर्धितस्य राजपुत्रस्य। तद्यथा शबरादिभिर्बाल्यप्रभृति-स्वसुतैः सह संवर्धितस्तज्जातीयमात्मानमवगमयन् मात्रा स्वरूपे कथिते लब्धस्वरूप एव भवति। तथा प्रकृत्या वेश्ययेव स्वभावान्तरं नीत आत्मा मातृस्थानीयया 'तत्त्वमसीति' श्रुत्या स्वभावं नीयते। यदेवंविधं परिशुद्धं वस्तु तदेव त्वमसि, न तु यथा मन्यसे मनुष्योऽहम्, दुःख्यहमित्यादि तथेति। ननु किमयमात्मा एकः, आहोस्विन्नाना? किमनेन ज्ञातेन? त्वं तावदेवंविधश्चिदेकरसः, नित्यनिर्मलः, कलुषसंसर्गात् कलुषतामिव गतः, तद्वियोगस्ते मोक्षः, त्वयि मुक्ते यद्यन्ये सन्ति ते संसरिष्यन्ति। का ते क्षतिः; अथ न सन्ति, तथापि कस्ते लाभ इत्यलमियता, महत्येषा कथा" इति।

## श्रीशङ्करभगवत्पादाः

इमानधिकृत्य शङ्करविजयनामानो बहवो ग्रन्थाः सन्ति बहुभिः पण्डितैः प्रणीताः। एतत्कृतेषु ग्रन्थेषु ब्रह्मसूत्रभाष्यम्, दशोपनिषदां भाष्याणि, गीताभाष्यं च प्राधान्यमर्हन्ति।

अन्येऽपि बहवः प्रकरणग्रन्थाः—उपदेशसाहस्रीविवेकचूडामण्यादय आचार्यपादैरेव कृताः शास्त्रव्युत्पत्तिरहितानामपि आत्मज्ञानाय। शिवविष्णुगणेशाम्बिकाकुमारादिस्तोत्राणि सन्ति बहून्यमृतवत् स्वादूनि तन्नामाङ्कितानि। जीवन्मुक्तस्य परमाद्वैताचार्यस्य सगुणदेवतास्तुतिः कुत्रोपयुज्यत इति न शङ्कनीयम्, "ईश्वरानुग्रहादेव पुंसामद्वैतवासना" इति सूतसंहितोक्त-रीत्या ईश्वरानुग्रहस्य मुमुक्षुणा अपेक्षितत्वात् तल्लाभार्थं परेषामुपकाराय स्तोत्राणि तै रचि-तानि। अत एव ते षण्मतस्थापनाचार्या इति व्यवह्रियन्ते। षण्मतानि वैदिकानि शिव-विष्णुगणपतिकुमाराम्बिकासूर्यप्रधानानि। तानि यद्यप्यनादीनि, तथापि तेषां समये वामा-चारपराणि बहून्युच्छृङ्खलानि मतान्यभूवन्। तानि निरस्य वेदमूलकानामेतेषां मतानां स्थापनं भगवत्पादैरकारि।

## कर्मकाण्डप्रामाण्यम्

वैदिकं हि मतं वेदमेव मूलतया ऊरीकरोति। वेदस्य च प्रामाण्यं न पुरुषविशेष-प्रणीतत्वेन, तथा सति पुरुषाणां भ्रमप्रमादादिसंभवादप्रामाण्यापत्तेः। नापीश्वरप्रणीतत्वेन तथा सति वेदाद्बहिरेवानुमानेनेश्वरः साधनीयो भवति। अनुमानं चाव्यवस्थितत्वादीश्वरा-व्यभिचारिलिङ्गाभावाच्च नेश्वरसाधकम्। अतो वेदा अपौरुषेयतया स्वत एव प्रमाणानीत्यङ्गी-क्रियते। न च वेदप्रामाण्येऽपि वेदव्याख्यातॄणां मतभेददर्शनात् तत्त्वाव्यवस्थातादवस्थ्यमिति शङ्कनीयम्। वेदव्याख्यानाय भगवता जैमिनिना व्यासेन च न्यायसूत्राणि रचितानि। तान्यव-लम्ब्य तदनुसारेण वेदव्याख्यानेनाव्यवस्थापत्तिः। न च तथापि सूत्रव्याख्याने मताचार्याणा-मभिप्रायभेदोऽस्त्येवेति वाच्यम्, "लोके येष्वर्थेषु प्रसिद्धानि पदानि तानि सूत्रेषु तदर्थान्येवे-त्यवगन्तव्यम्। नाध्याहारादिभिरेषामर्थः परिकल्पनीयः परिभाषितव्यो वा" इति पूर्वमीमांसा-भाष्यकारोक्तरीत्या सूत्रेष्वभिप्रायभेदः सुखं निरसितुं शक्यते।

एवं कर्मकाण्डं यथाश्रुतार्थपरतया व्याख्यातुम्, वेदोक्तानि स्मृत्याद्युक्तानि च कर्माण्यनुष्ठातुं न कोऽपि प्रतिबन्धोऽद्वैतनये, यतस्तत्त्वमस्यादिवाक्यानि विहाय सर्वेषां वेदवाक्यानां तत्त्वज्ञानावधिव्यावहारिकं प्रामाण्यमिष्यते। यथा देहातिरिक्तात्मवादिनां सर्वेषां शरीरे आत्मप्रत्ययः। अहं स्थूलः, कृष्णः, ह्रस्वः, दीर्घ इत्यादिप्रत्ययः प्रमाणमिष्यते एवं मम पिता, मम पुत्र इत्यादयोऽपि प्रमाणानि। न ह्यहं पदार्थत्वेनाभिमत आत्मा स्थूलत्वादिभाक्, नापि तस्य पुत्रः पिता वा, नित्यत्वात्; परन्तु तत्प्रमाणमेव, अन्यथा लोके बहु विप्लवापत्तेः। तत्प्रामाण्यं च व्यवहारमात्रे, न तु परमार्थत इति स्वीकार्यं द्वैतिभिरपि

इदमेवाद्वैतिभिरप्यनूद्यते—

> देहात्मप्रत्ययो यद्वत् प्रमाणत्वेन सम्मतः ।
> लौकिकं तद्वदेवेदं प्रमाणं त्वात्मनिश्चयात् ॥

इति वदद्भिः । अत एव शिवपुराणं विष्णुपुराणं च तुल्यवदेव प्रमाणभूते, न तु तामसत्वे शिवपुराणाप्रामाण्यं वैष्णवानामेवं वैष्णवपुराणाप्रामाण्यं शैवानाम् । विष्णुपुराणे शिवापकर्षोक्तिः । एवं शिवपुराणे विष्णवपकर्षोक्तिः, "नहि निन्दा निन्दितुं प्रवृत्ता, अपि तु स्तुत्यं स्तोतुम्" इति न्यायादेतदुत्कर्षान्तरमद्वैतवादस्य । शिवविष्णुगणपत्यादीनां षण्णामपि देवानां स्वस्वपुराणेषु सहस्रनामादिषु च सृष्टिस्थित्यन्तकारित्वम्, कर्मफलप्रदत्वं सर्वान्तर्यामितया नियामकत्वं च न विरुध्यते, तेषां देवानां ब्रह्मण एव रूपभेदत्वेनाङ्गीकारात् । तदुक्तं कालिदासेन—

> एकैव मूर्तिर्बिभिदे त्रिधा सा सामान्यमेषां प्रथमावरत्वम् ।
> विष्णोर्हरस्तस्य हरिः कदाचिद् वेधास्तयोस्तावपि धातुराद्यौ ॥ इति ।

द्वैतवादिनां तु वैष्णवानां शिवे स्रष्टृत्वाद्युक्तिर्विरुध्येत, तथा शैवानां विष्णौ तदुक्तिर्विरुध्येत इति तैर्लक्षणादिना व्याख्यातव्यं भवेत् । अद्वैतिनां तु सर्वं यथार्थमेवेति विशेषः ।

अद्वैतिनां स्वेष्टसिध्यर्थं या काचन वैदिकदेवता उपासितुं शक्येति विशेषान्तरम् । अत एवाद्वैतसिध्यादिप्रौढग्रन्थप्रणेतारो मधुसूदनसरस्वत्यः "कृष्णात्परं किमपि तत्त्वमहं न जाने" इति सुधीरमुदघुष्यन् । परिमलन्यायरक्षामण्यादिग्रन्थप्रणयनविश्रुतकीर्तयोऽप्पय्यदीक्षिताः—

> महेश्वरे वा जगतामधीश्वरे जनार्दने वा जगदन्तरात्मनि ।
> न वस्तुभेदप्रतिपत्तिरस्ति मे तथापि भक्तिस्तरुणेन्दुशेखरे ॥

इति सारोपमूरीचक्रुः ।

## मोक्षे विशेषः

अद्वैते 'ब्रह्मविद् ब्रह्मैव भवति" इति श्रुतिमनुसृत्य ब्रह्मभावो मोक्षोऽङ्गीक्रियते । ब्रह्म च "सत्यं ज्ञानमनन्तं ब्रह्म", "विज्ञानमानन्दं ब्रह्म" इति श्रुतेः सत्यज्ञानानन्दात्मकम् । तथा चापरिच्छिन्नानन्दस्य नित्यप्रकाश एव मोक्षः । स च द्वैतनाशात् सर्वात्मभाव इत्युच्यते । सर्वेऽपि ह्यात्मानो ब्रह्मैव । ब्रह्मविद् यदा ब्रह्मैव भवति तदा स सर्वजीवात्मको

भवति । तत्तज्जीवगतसुखानि तस्यैव ब्रह्मविदो भवन्ति, तदुक्तम् "सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चितेति" इति तैत्तिरीयोपनिषदि । उपबृंहितं चेदं वाक्यं शिवपुराणे—

सोऽश्नुते सकलान् कामानक्रमेण सुरर्षभाः ।
विदितब्रह्मरूपेण······ ॥ इति ।

न च सकलजीवगतदुःखानामपि तस्मिन् प्रसङ्गः, दुःखानां मिथ्यात्वात्; तत्त्वदर्शिनि तस्मिन्नप्रसङ्गात् । इत्थं च सर्वात्मभावोऽपरिच्छिन्नस्वप्रकाशानन्दस्वरूपो मोक्ष इति सिद्धम् । इतरमतेषु तु वैकुण्ठकैलासादिलोके भोगानुभवो मोक्ष इष्यते । सोऽप्यस्मिन् मत इष्यत एव परं तूपासनाफलतया अर्वाचीनमोक्षः सः, न परममोक्षः । अस्मिन् मोक्षे द्वैतदर्शनसद्भावात् भयादनिवृत्तिः, "द्वितीयाद्वै भयं भवति" इति श्रुतेः । ब्रह्मणोऽपि प्रथमजस्य "स वै नैवरेमे," "सोऽबिभेत्" इत्यादिश्रुतिषु भयारत्यादिश्रवणात् । सर्वात्मभावस्य दुःखभयादिराहित्यं तु लोकानुभवसिद्धम् । तथाहि—कस्मिंश्चिद् देशे विरुद्धगोष्ठीद्वयं भवति, उभयमपि प्रत्येकमितरगोष्ठीं तद्घटकजनांश्च हन्तुमुद्युक्तम् । तदा अन्यतरगोष्ठीप्रविष्टः स्वगोष्ठीं प्रविश्य निर्भयो भवति । एवं बहूनामैकमत्ये तत्प्रविष्टानां सुखं दृष्टम् । एवमेव निखिलप्रपञ्चे पशुपक्षिमृगमनुष्यादिसहिते यदेकीभावो भवति, तदा कः कं हिंस्यात्, आत्मनि तदसंभवात् । अतोऽद्वैताभिमतो मोक्ष एव सर्वमतसिद्धमोक्षेभ्यो गरीयानिति सिद्धम् । उक्तं च ब्रह्मानन्दसरस्वतीभिः—"वेदान्तदर्शनं दर्शनेषु सर्वेषु दर्शनीयतमं दर्शनम्" इति ।

अपि च यद्यद्वैतरीत्या एकमेव ब्रह्म बहूनि शिवविष्णुगौरीगणपत्यादिरूपाणि भक्तानुग्रहाय स्वीकरोति, न तत्त्वे भेद इत्यास्थीयेत, तदा वेदप्रमाणोपजीविनां हिन्दूनां परस्परमैक्यं दृढीभवति । न शैवा वैष्णवान् द्विषन्ति, न वा वैष्णवाः शैवानित्येवं जनेषु ऐक्यभावना अद्वैतभावावलम्बनेन दृढीभवति । द्वैते तु कलहः प्रसज्यते, दृश्यते च । एवंरीत्या वेदब्राह्ममते स्थितैरप्यद्वैतभावना कर्तव्या, एकमेव ब्रह्म तत्तदुपाधिभेदाद् भिद्यते, न स्वरूपतो भेदः कुत्राप्यस्तीति । तथा च लोके शान्तिः सुभिक्षं च जनानानन्दयिष्यति ।

श्रीशङ्कराचार्याणां गुरवो गोविन्दभगवत्पादाः । यद्यपि तद्रचितो ग्रन्थः कोऽपि न दृश्यते श्रूयते वा, तथापि परमार्थसाराख्यो ग्रन्थ आदिशेषकृतः समुपलभ्यते । भगवान् गोविन्दश्च भगवदादिशेषावतार इति प्रसिद्धिः । अतस्तमेव ग्रन्थमवलम्ब्य गोविन्दभगवत्पादानामद्वैताभिप्रायो लिख्यते । तथा हि—

धर्माधर्मौ सुखदुःखकल्पना स्वर्गनरकवासश्च ।
उत्पत्तिनिधनवर्णाश्रमा न सन्तीह परमार्थे ॥
तैमिरिकचन्द्रयुगवद् भ्रान्तं निखिलं जगद्रूपम् ।

इति प्रपञ्चमिथ्यात्वमुवाच ।

एकस्मात् क्षेत्रज्ञाद् बहवः क्षेत्रज्ञजातयो जाताः ।
लोहगतादिव दहनात् समन्ततो विस्फुलिङ्गगणाः ॥
( शेषार्थः )

इति परमात्मन उपाधिपरिच्छिन्नभागा एव जीवा इत्यवोचत् ।

व्यापिनमभिन्नमित्थं सर्वात्मानं विधूतनानात्वम् ।
निरुपमपरमानन्दं यो वेद स तन्मयो भवति ॥

अत्रात्मनः सर्वात्मत्वं तद्भावश्च मोक्ष इत्यूरीकरोति ।

मोक्षस्य नैव किञ्चिद्धामास्ति न चापि गमनमन्यत्र ।
अज्ञानमयग्रन्थेर्भेदो यस्तं विदुर्मोक्षम् ॥

इति च अज्ञाननिवृत्तिरेव मोक्षः, स चात्रैवेति स्पष्टमाह । काव्यनाटकादिरचयितारोऽपि केचनाद्वैतसिद्धान्तं मनसि कृत्वा तत्तद्ग्रन्थान् रचयन्ति, तेऽप्यद्वैतदर्शनगुरुपरम्परायामन्तर्भूता एव ।

तथाहि श्रीकृष्णमिश्रः प्रबोधचन्द्रोदयनाटकरचयिता स्वीये नाटके नान्दापठनावसरे—

मध्याह्नार्कमरीचिकास्विव पयःपूरो यदज्ञानतः
खं वायुर्ज्वलनोऽचला जलमिति त्रैलोक्यमुन्मीलति ।
यत्तत्त्वं विदुषां निमीलति पुनः स्रग्भोगिभोगोपमं
सान्द्रानन्दमुपास्महे तदमलं स्वात्मावबोधं महः ॥

इति वदन् अज्ञानाद्बन्धं ज्ञानान्मोक्षं चानुवदति । एवमेव बहवोऽद्वैतदर्शनरसिकास्तत्राचार्यस्थानार्हा अपि न तत्र ग्रन्थानरचयन्, परन्तु तेषां तेषामभिमततरे काव्यादौ वा, मीमांसायां वा, न्याये वा ग्रन्थान् रचयामासुः; तथापि स्वेषामद्वैते परम आदरोऽस्तीति सूचयांबभूवुः । तेऽप्यस्माकमद्वैतदर्शनाचार्यत्वेन परिगणनार्हा एव । तथाहि न्यायाचार्येति प्रसिद्धा उदयनाचार्या ऊचिरे स्वकृते बौद्धाधिकारे—

न ग्राह्यभेदमवधूय धियोऽस्ति वृत्तिस्तद्बाधके बलिनि वेदनये जयश्रीः ।
नो चेदनित्यमिदमीदृशमेव विश्वं तथ्यं तथागतमतस्य तु कोऽवकाशः ॥

इत्याहुः ।

अस्यार्थः—ग्राह्यभेदं घटादि तिरस्कृत्य घटाकाराभिन्नरूपेण ज्ञानस्य वृत्ति संबन्धः कोऽपि नास्ति । घटादिबहिरर्थबाधकेऽद्वैतब्रह्मरूपाधिष्ठानसाक्षात्कारे जाते तु बलिनि सर्वेभ्यो द्वैतवादिमतेभ्यो बलवति वेदनये वेदान्तदर्शने जयश्रीः जयोत्कर्ष काष्ठा—बौद्धमतापेक्षया तार्किकमते, तदपेक्षया सांख्ये, तदपेक्षया वेदान्तिमते इति तत्र जयोत्कर्षकाष्ठेत्यर्थः ।

अन्यत्रापि—"स्वतस्सिद्धतया तदनुभवरूपम्, शून्यत्वादेव न तस्य कालावच्छेद इति नित्यम् । अत एव न तस्य देशावच्छेद इति व्यापकम् । अत एव विशेषाभाव इत्यद्वैतम्" इत्यादिना बहु अद्वैतं प्रशंसन्ति ।

मणिकारोऽपि—"गुणातीतोऽपीशस्त्रिगुणसहितस्त्र्यक्षरमयः" इति मङ्गलश्लोके ईशो निर्गुणः स्वतः, गुणसंबन्धात्तु तस्य ब्रह्मविष्णवादिमूर्तिभेदा इत्याचष्टे ।

दीधितिकारोऽपि

ओं नमस्सर्वभूतानि विष्टभ्य परितिष्ठते ।
अखण्डानन्दबोधाय पूर्णाय परमात्मने ॥

इति मङ्गले भगवन्तमखण्डानन्दबोधेति ब्रुवन्, तस्य सच्चिदानन्दरूपतामाह । विशेषतः खण्डनखण्डखाद्यस्य खण्डनभूषामण्याख्यां टीकां कृत्वा स्वस्याद्वैते परमादरं सूचयति ।

कन्दलीकारोऽपि

ध्यानैकतानमनसो विगतप्रचाराः पश्यन्ति यं कमपि निर्मलमद्वितीयम् ।
ज्ञानात्मने विघटिताखिलबन्धनाय तस्मै नमो भगवते पुरुषोत्तमाय ॥

इति भगवन्तं स्तुवन् तस्य यत् पारमार्थिकमद्वितीयं ज्ञानात्मकं रूपं तत् प्रशंसति ।

अत्राह मीमांसकेषु प्रभाकरः "यस्तु ब्रह्मविदामेष निश्चयः—यदुपलभ्यते, न तत् तथ्यमिति नमस्तेभ्यः । विदुषि नोत्तरं वाच्यम्", "यदुक्तमहङ्कारममकारौ अनात्मनि आत्माभिमानौ" इति मृदितकषायाणामेवैतत् कथनीयम्, न कर्मसङ्गिनामित्युपरम्यते । आह च भगवान् द्वैपायनः "न बुद्धिभेदं जनयेदज्ञानां कर्मसङ्गिनाम् ।" इति ।

एभिर्वचनैः प्रभाकरः स्वस्याद्वैत एव श्रद्धेति सूचयति। भाट्टदीपिकाकौस्तुभादि-रचयिता खण्डदेवः "यदा तु ज्ञानकर्मसमुच्चयोऽपि प्रामाणिकः" इति ब्रुवन् तस्याप्रामाणिकतामभिप्रेयाय—"तद्दूषणं शारीरकमीमांसाभाष्यकारैर्भगवत्पूज्यपादैरेव कृतं तत्रैव द्रष्टव्यम्" इति वदन् टीकाकारः शम्भुभट्ट इममभिप्रायमुपोद्बलयति।

योगशास्त्ररचयिता भगवान् पतञ्जलिः "कृतार्थं प्रति नष्टमप्यनष्टं तदन्यसाधारणत्वात्" इति ब्रुवन् प्रपञ्चानिर्वाच्यत्वं स्वहस्तयति। न हि क्वचित् पारमार्थिकं वस्तु कञ्चित् प्रति नष्टम् अन्यं प्रत्यनष्टं भवति। अतोऽनष्टत्वेन भानमात्रे वस्तुनो मिथ्यात्वे च तात्पर्यमस्य।

अपि च श्रीवाचस्पतिमिश्रा भामत्याम् 'एतेन योगः प्रत्युक्तः' इत्यधिकरणे "न चैतानि योगशास्त्राणि प्रधानादिसद्भावप्रतिपादनपराणि, किन्तु योगस्वरूपतत्साधनतदवान्तरफलविभूतितत्परमफलकैवल्यव्युत्पादनपराणि। तच्च यत्किञ्चिन्निमित्तीकृत्य व्युत्पाद्यमिति प्रधानं सविकारं निमित्तीकृतम, न तु व्युत्पाद्यम्।" अत एव योगं व्युत्पादयिता आह स्म भगवान् वार्षगण्यः—

गुणानां परमं रूपं न दृष्टिपथमृच्छति।
यत्तु दृष्टिपथं प्राप्तं तन्मायैव सुतुच्छकम्॥ इति।

## श्रीहर्षमिश्राः

खण्डनखण्डखाद्यकाराः श्रीहर्षमिश्रा अत्र विशेषेण प्रशंसामर्हन्ति। अद्वैतशास्त्रे हि मुख्यतया विचारणीयं ब्रह्मणः सत्यत्वं प्रपञ्चस्य मिथ्यात्वं चेति विषयद्वयमेव। तत्र प्रपञ्चमिथ्यात्वं नाम सदसत्त्वाभ्यामनिर्वचनीयम्। इदमेव च खण्डनकारैः स्वग्रन्थे अनिर्वचनीयसर्वस्वापरपर्याये समीचीनया रीत्या निरवर्ति। न च ब्रह्मसत्यत्वाव्यवस्थापनेन तद्ग्रन्थस्य न्यूनता शङ्कनीया। यतः प्रपञ्चमिथ्यात्वस्थापनेनैव तदपि कृतमेव मन्यन्ते महाभागाः। प्रपञ्चनिराकरणं हि किञ्चित् सत्यवस्त्वनालम्ब्य न सिध्यति, शून्यवादापत्तेः। न च शून्यवादोऽभ्युपगमार्हः, य एव प्रपञ्चनिराकर्ता तस्यैव ब्रह्मत्वात्। तन्निराकरणं त्वशक्यमेव, असाक्षिकत्वापत्तेः। साक्ष्यभावे प्रपञ्चतात्त्विकत्वस्यैव प्रसङ्गात्। अत एव खण्डनकाराः—

अभीष्टसिद्धावपि खण्डनानामखण्डि राज्ञामिव नैवमाज्ञा।
तत्तानि कस्मान्न यथावदेव सैद्धान्तिकेऽप्यध्वनि योजयध्वम्॥

इति स्वाभिमतसिद्धान्तप्रक्रियाखण्डनमपि स्वाभिमतं सूचयन्ति। अतोऽद्वैततत्त्वस्थापके
प्रथमगणनीयास्तत्र भवन्तो हर्षमिश्राः। अपि च—

ताम्बूलद्वयमासनं च लभते यः कान्यकुब्जेश्वरात्।
यः साक्षात्कुरुते समाधिषु परब्रह्मप्रमोदार्णवम्॥

इति स्वस्य ब्रह्मसाक्षात्कारं समाधिकाले वदन्त आत्मनो जीवन्मुक्ततां वदन्ति।

यद्यपि जीवन्मुक्तिं प्राप्ता अद्वैतगुरुपराम्परायां बहवः सम्भाव्यन्ते, तथापि केषाञ्चिदेव
तादृशीमवस्थां सप्रमाणं शृणुमः। यथा श्रीशङ्कराचार्याः (ब्र० सू० ४।१।१५)—

"अपि च नैवात्र विवदितव्यं ब्रह्मविदा कञ्चित् कालं शरीरं ध्रियते, न वा ध्रियत
इति। कथं ह्येकस्य स्वहृदयप्रत्ययं ब्रह्मवेदनं देहधारणं चापरेण प्रतिक्षेप्तुं शक्यते" इति।

अत्र भामतीटीका—"ये भाष्यकारमाप्तं मन्यन्ते, तान्प्रत्याह—अपि चेति।
भामतीकारा अपि जीवन्मुक्ताः—

यन्न्यायसांख्ययोगानां वेदान्तानां निबन्धनैः।
समचैषं महत् पुण्यं तत्फलं पुष्कलं मया।
समर्पितमथैतेन प्रीयतां परमेश्वरः॥

इति भामतीसमाप्तिश्लोकः। तत्र कल्पतरुः स्वस्य साक्षात्कृतब्रह्मतया फलेऽप्यस
दर्शयति—"यन्न्यायेति" इत्यवतारयन् तेषां ब्रह्मसाक्षात्कारं दर्शयति।

## अद्वैतसिद्धिकारा मधुसूदनसरस्वत्यः

एते ह्यद्वैतसिध्यन्ते—

गुरूणां माहात्म्यान्नि—जविविधविद्यापरिचया-
च्छ्रुतेर्यन्मे सम्यङ्मननपरिनिष्पन्नमभवत्।
........................................................
परब्रह्मानन्दस्फुरण — मखिलानर्थशमनम्॥

इति वदन्तः स्वस्य जीवन्मुक्ततामाहुः।

## सदाशिवब्रह्मेन्द्राः

इमे दक्षिणभारते जीवन्मुक्तिसुखमन्वभूवन्। यदाहुः—

कामपि विमलां पदवीमासाद्यानन्दसंविदुन्निद्राम्।
अस्ति भिक्षुक एको विहरन्निर्मुक्तबन्धनः स्वैरम्॥

आचार्यायाङ्गदृशा　　समवाप्तापारसंविदाकारः　　।
प्रशमितसकलभेदः　　परहंसः　　कश्चिदाभाति ॥

इत्याद्यात्मविद्याविलासे ।

## वासुदेवानन्दसरस्वत्यः स्वीये दक्षिणामूर्तिविलासे—

प्रत्यग्ब्रह्मैक्यसंप्रज्ञा　— चण्डसूर्यप्रबोधनात् ।
अहोऽविद्यानिशा घोरा सुप्रभाता ममाधुना ॥
प्रसादाद् दक्षिणामूर्तेः　　श्रुत्याचार्यप्रसादतः ।
स्वानुभूत्याप्यहं ब्रह्मेत्येवं मे दृढनिश्चयः ॥ इति ।

एतादृशा बहव आसन्, सन्ति भविष्यन्ति च; तेऽपि गुरव एव । श्रीशङ्कराचार्यादर्वाचीना बहव आचार्यास्सन्ति निरतिशयमहिमानः, तानधिकृत्य सन्दर्भान्तरे वक्ष्यामि । इति शम् ।



# शङ्कराचार्यतः पूर्वमद्वैतवादस्य किं स्वरूपम् ?

आचार्यो द्विजेन्द्रनाथशास्त्री, विद्यामार्तण्डः
मेरठ ।

सुविदितमेवास्ति एतद्विपश्चितां यद् दार्शनिके जगति सुगृहीतनामधेयानां श्रीमच्छङ्क
मुनिपादानां स्थानमत्युत्कृष्टं निरतिशयविशिष्टञ्चेति । इमे हि प्रदीप्तप्रतिभा
न्तोऽद्वितीयतार्किकाश्चासन् इत्यत्र को नामानूचानः संशयीत । तदेषां प्रादुर्भावात् पू
मद्वैतवादस्य किं स्वरूपमासीदिति प्रतिपादनात् पूर्वम्, शङ्करनयेन किंस्वरूपोऽयमद्वैतवाद
किंलक्षणश्चेति प्रतिपादनं तावदावश्यकतरं प्रतिभातीति तदेवाधुना विशदयितुमुपक्रम्यते । यत
तत्स्वरूपप्रतिपत्त्यनन्तरमेवावबोद्धुं पार्यते यत् शङ्करोदयात् पूर्वमद्वैतवादोऽयं लब्धसत्ता
आसीन्न वेति । मदीयोऽयं पक्षो यद् भगवान् शङ्कर एवास्याद्वैतवादस्य प्रवर्तकः, शङ्करोपज्ञ
एवायं वादः, न शङ्करतः पूर्वं वादोऽयं लब्धसत्ताकः । यतो न क्वचिदपि वेदे, वैदि
साहित्ये चास्य वादस्य ईदृक्तया दृष्टिगोचरता, तद्विपरीतं भेदवादप्रतिपादिकाश्च नैकाः श्रुत
दृक्पथमवतरन्ति । तथाहि ऋग्वेदे—

"द्वा सुपर्णा" इत्युपक्रम्य "परमं साम्यमुपैति" इत्युपसंहारः, "तयोरन्यः पिप्प
स्वाद्वत्ति अश्नन्नन्यः अभिचाकशीति" इत्याद्याः ।

## शङ्करसिद्धान्तः

तदधुना संग्रहेण शङ्करसिद्धान्तमुपवर्णयितुं समुपक्रम्यते, निदर्शनधियेति । तत्र प्रथ
तावद् अध्यासवादः । अध्यासो हि नाम 'अतस्मिन् तद्बुद्धिः', अर्थात् तदभाववि
तत्प्रकारकं ज्ञानम्, अतत्पदार्थे तत्पदार्थस्याध्यारोपो वेत्यर्थः । सोऽयमध्यासो मायाविजृम्भित
अविद्या, माया, भ्रमः, अज्ञानमिति समानार्थकाः शब्दाः । तदेतदविद्योपाध्यवच्छिन्नमे
ब्रह्मसृष्टिप्रवर्त्तकमिति प्रवदन्ति अद्वैतवादिनः । तदुपोद्बलकत्वेन च "एकोऽहं बहु स्याम
इति श्रुतिं पुरस्कुर्वन्ति । श्रुतिपदेन इमे उपनिषज्जातमेवाभिप्रयन्ति, न ख
वेदम् । स पुनरध्यासोऽयमनादिरनन्तश्चैषां नये । यथाहुराचार्यचरणाः—"एवमना
रनन्तोऽयं नैसर्गिकोऽध्यासो मिथ्याप्रत्ययरूपः, कर्त्तृत्वभोक्तृत्वप्रवर्तकः सर्वलोकप्रत्यक्ष
इति ।

## प्रतिबिम्बवादः

एष वादोऽपि प्रमुखतरं स्थानं समालम्बते, अद्वैतवादिनां दले। यथा गगनमण्डलाधिष्ठितस्य सूर्यस्य प्रभामण्डलमण्डितं रूपं जले समुत्क्षिप्तं बिम्बपदेन व्यवह्रियते, तदेव बिम्बं क्वचिदन्यत्र सङ्क्रममाणं प्रतिबिम्बपदेन व्यपदिश्यते, तथैव मायायां ब्रह्मणो बिम्बप्रतिबिम्बभेदात् क्रमेण ईश्वरत्वं जीवत्वञ्च भजमानं ब्रह्मैव तत्तत्पदेन व्यपदिश्यत इति बिम्बवादस्याशयः। एषां नये तादृश ईश्वर एव जगद्व्यापारप्रवर्त्तकः सृष्टिकर्त्तृत्वेनोन्नीयेत। तल्लक्षण ईश्वरप्रतिबिम्बरूपो जीवश्च भोक्तृत्वेनेति, भोग्या च पुनर्मायारूपिणी प्रकृतिरिति। मायाशम्बलितं तद् ब्रह्मैव तथा सत्यपि तन्निर्लेपं निरञ्जनञ्च सत् केवलमस्य प्रपञ्चस्य साक्षिमात्रत्वेन विराजते जगतः साक्ष्यरसं लेलिहान इति।

## विवर्त्तवादः

विवर्त्तवादोऽयमपरोऽतिमूल्यवान् सिद्धान्तोऽद्वैतिनाम्। अद्वैतं सदपि मायोपाध्यवच्छिन्नमपि ब्रह्म कथं निर्लेपमिति शङ्कामपाकर्त्तुं मन्येऽस्य विवर्त्तवादस्य जन्म। सोऽयं विवर्त्तवादोऽद्वैतवादिनामपरो गरिष्ठोऽवष्टम्भः, यमवलम्ब्य जितमस्माभिरिति मन्यन्ते किल शाङ्कराः सगर्वम्। विवर्त्तो नाम—स्वरूपमजहद्रूपान्तरप्राप्तिः। यथा स्वर्णात् कटककुण्डलरुचकादयो विवर्त्तन्ते, पुनश्चान्ते स्वर्णरूपतामयन्ते। परिणामवादे पुनः तद्विसदृशतया रूपान्तरं प्राप्तं विकृतं वस्तु न कदापि स्वरूपतामश्नुते, यथा पयसो दधिनवनीतादिविकाराः। तदेष विवर्त्तवादो परिणामवादतो नितरां भिद्यतेतराम्। यथा चाहुरभियुक्ताः—

सतत्त्वतोऽन्यथाप्रथा　विकार　इत्युदीरितः।
अतत्त्वतोऽन्यथाप्रथा　विवर्त्त　इत्युदीरितः॥ इति।

तदेवं तात्त्विकं परिवर्त्तनं विकारः, अतात्त्विकं परिवर्त्तनं विवर्त्त इति निकृष्टोऽर्थः।

## अभिन्ननिमित्तोपादानवादः

अस्य दृश्यसृष्टिप्रपञ्चस्य च ते ब्रह्मणोऽभिन्ननिमित्तोपादानकारणतामङ्गीकुर्वन्ति। न चैकस्मिन् चिदात्मके ब्रह्मणि जगतो निमित्तोपादानेत्युभयकारणता समकालावच्छेदेन कथं घटेतेत्याशङ्कनीयम्, तच्चेतनकल्पाश्रयणान्निमित्तकारणत्वस्य; मायोपाध्यवच्छेदकल्पावलम्बाच्च तदुपादानकारणत्वस्य सुतरां सुघटत्वेन अनुपपत्त्यभावात्। पुरस्कुर्वन्ति चैतदुपोद्बलकत्वेन ते लूतादृष्टान्तम्। यथा लूता स्वदेहात् तन्तुजालमाकृष्य वितनोति बहिर्जालकम्

पुनश्च तदन्तर्गृह्णातीति, तद्वत् । तथैव ब्रह्मापि स्वलीलया शक्तिसमभिव्यक्तेश्च जगदे विरचयति, रक्षति तथान्तेऽभ्यवहरति च । यत्र "सृजते गृह्णते च" इति श्रुतिं मुदा प्रत्यव पयन्ति च । तेषां राद्धान्तस्य भगवतो ब्रह्मणः सकाशादेवेदं जगदुत्पद्यते, तस्मिन्नेव सन्ति तत्रैव च लयं यातीति निष्कर्षसारभूत इति ।

वस्तुत आचार्यशङ्करस्याद्वैतवादोऽयं तत्प्रादुर्भावात् पूर्वं वैदिके साहित्ये क्वचिदं सङ्केतितोऽपि न प्रत्यक्षीक्रियते । तद्विपरीतं तु द्वैतवादस्य पदे पदे समुपलम्भो दृश्यते, अद्वै वादस्य तु न । निबन्धविस्तरभिया न तदत्र लघुनिबन्धे विशदयितुं समर्था वयम् ।

सूक्ष्मेक्षिकया विचार्यमाणे सुतरामिदं प्रज्ञापथमवतरति यदन्ते शङ्करेणापि त्रैतव एव सृष्टिविश्लेषणं कुर्वता समुपलालितः । वैदिकानाम् 'ईश्वरः, जीवः, प्रकृतिः' इति पदा त्रयमेव जगद्व्यापारप्रवर्तकत्वेन समुन्नीयते । तदविसदृशतया शङ्करस्यापि तादृग् ईश्वर जीवः प्रकृतिश्चेति पदार्थत्रयं मायाव्याजीकृत्य समुपलालनीयतामुपगतम् ।

मन्ये एतादृशोऽयं द्राविडीप्राणायामस्य आश्रयणमेव श्रेयस्करं समभ्युपपन्नमभ आचार्यचरणस्य ।

केवलं दुर्दान्तचार्वाकजैनबौद्धादीनां निरीश्वरवादिनां वेदप्रामाण्यविप्लावनसमुत्सुका तर्ककुठारकुण्ठीकरणायैव शङ्करेण अयमद्वैतवादो निस्संशयम् आविष्कृतः । ईश्वरो नास्त्ये खल्विति तेषां राद्धान्तं प्रमुखवृत्त्या अपाकर्तुमेव अस्य अद्वैतवादप्रखरतरकर्कशकुठार आविष्कारः ।

यतो ब्रह्मातिरिक्तं निखिलं विकृतं विनाश्येव । जीवस्याप्यल्पज्ञतया स्वल्पशक्तिम न तादृशं प्राधान्यम् । तत् तदस्तितामनुसन्धाय, यादृक् खलु सर्वाधारभूतस्य सर्वप्रवर्त्तक सृष्टिस्थितिलयहेतोरनन्तस्य परब्रह्मणोऽस्तित्वं साधनीयम् । अतो ब्रह्मसाधनेनैव सर्वं सि भवतीति ब्रह्ममात्रस्य बलवत्प्रतिपादनमनीषयैव भगवतः शङ्कराचार्यस्याद्वैतवादरूपोऽ भागीरथपरिश्रम इति ।

नास्त्यत्र कश्चन सन्देहलवोऽपि यद् एष अद्वैतवादः श्रीशङ्कराचार्यमुनिपादोपज्ञ एव वादोऽयं निर्विशङ्कम् एषां प्रदीप्तप्रतिभाम्, प्रखरतर्कपाटवम्, प्रकाण्डपाण्डित्य तत्त्वपारदर्शिनीं प्रज्ञां च परिचाययति ।

यदत्र बहव आशेरते—यद् दुर्दान्तनास्तिकानां खण्डनविधातुमना एव शङ्कर एवंवि वादं प्रवर्तयाञ्चकार इति वचः सुतरां सुवचमेवेति मन्ये । इत्यलमतिपल्लवितेन ।



# वैदिकदर्शनानामेकवाक्यत्वं तेष्वद्वैतदर्शनस्य प्रतिष्ठा च

डॉ० स्वामी आत्मानन्दपरमहंसः

बी १।३५ पाठकनिवासः, अस्सी, वाराणसी–५

स्वाभीष्टकार्यसिध्यर्थं या देवैरप्युपास्यते।
सम्यग्बुद्धेरवाप्त्यर्थं तां वाणीं समुपास्महे॥

अथ जगतोऽस्य निखिलप्राणिवर्गो निसर्गत एवेष्टमभीप्सत्यनिष्टं परिजिहीर्षति च। अतो भगवानाम्नायस्तदुपायं प्रतिपादयन्नखिलं प्राणिजातमनुगृह्णाति। तत्र ज्ञानाकरे वेदे सर्वविषयकज्ञानस्योपदेष्टृत्वमस्तीति सर्वेऽप्यास्तिका अनुमन्यन्ते। स तु वेदः पूर्वमविभक्त एवासीदिति ह्यैतिहासिका विद्वांसो वदन्ति, किन्तु सोऽतिदुरूहतया, सर्वैस्सारल्येनावगन्तुमशक्यतया च क्रमश उत्सीदन्नासीत्। अतः परमकारुणिकेन भगवता व्यासेन तस्य चतुर्धा विभागः कृतः। यथोक्तम्—

[1]अवतीर्णो महायोगी सत्यवत्यां पराशरात्।
उत्सन्नान् भगवान् वेदानुज्जहार हरिः स्वयम्॥
चतुर्धा व्यभजत्तांश्च चतुर्विंशतिधा पुनः।
शतधा चैकधा चैव तथैव च सहस्रधा॥ इति।

तेन कियतः सारल्यस्य सम्पन्नतया जनेषु तदध्ययनाध्यापने प्रावर्तेताम्, सम्पूर्णा मानवजातिश्च साक्षात्परम्परया वा तेन चिरमुपकृता बभूव परं कालक्रमेण।

[2]जन्मसंस्कारविद्यादेः शक्तेः स्वाध्यायकर्मणोः।
ह्रासदर्शनतो ह्रासः सम्प्रदायस्य मीयताम्॥

इत्युदयनाचार्यवचनानुसारेण वेदानामनुशीलनमुत्तरकालेषु शिथिलं मलिनं चाभूत्। अत एव तत्प्रतिपादितार्थसारस्य सारल्येनावबोधनार्हतासम्पादनाय महर्षिभिर्दर्शनानि प्रणीतानि।

दर्शनेषु च तेषु यद्यप्यधिकारिभेदप्रयुक्तं दृष्टिभेदप्रयुक्तञ्च वैषम्यं नूनमस्ति, तथापि दुःखनिवृत्तिस्सर्वेषामप्यभीष्टं प्रयोजनमित्यत्र समेषां दर्शनानामैकमत्यं निर्विवादम्। ये खलु

१. न्यायपरिशुद्धेर्न्यायसाराख्यटीकायामुदाहृतौ श्लोकौ, पृ० ४।

२. न्यायकुसुमाञ्जलिस्थद्वितीयस्तबके, श्लो० ३, पृ० २९२।

सुखं चरमप्रयोजनतयाऽऽकलयन्ति, तन्मतेऽपि दुःखाभावस्य प्रयोजनत्वमपरिहार्यम्, सुखस्य दुःखसहितस्य केनाप्यनभीप्सितत्वात्। दुःखस्य कारणं तु मिथ्याज्ञानमित्यत्रापि स दर्शनानामविवादः। तच्च मिथ्याज्ञानं स्वात्मगोचरं स्वात्मतत्त्वज्ञाननिवर्त्यञ्चेत्यत्रापि स दर्शनानामविप्रतिपत्तिरेव। जगतो निदानं मिथ्याज्ञानं यद्यप्यात्मगोचरमिति सत्यम्, तथाप्य त्मनोऽस्तित्वस्वरूपयोर्विषये मतनानात्वेन तन्नानाविधत्वमालम्बते। यथाहि—केचित् पुत्रा ष्वात्मबुद्धिं कुर्वन्तस्तद्विकलतायामहमेव विकलः, तत्सम्पन्नतायाञ्चाहमेव सम्पन्न इ प्रतियन्तश्च स्वीयां धारणाम् "आत्मा वै जायते पुत्रः" इत्यादिवाक्यैः प्रमाणयन्ति। तादृ जनान् कश्चिद् देहात्मवादी शिक्षयति—न पुत्रादय आत्मा, भूतचतुष्टयसङ्घातविशेषात्म चेतनं शरीरमेवात्मेति—

[१]आत्मास्ति देहव्यतिरिक्तमूर्तिः भोक्ता स लोकान्तरितः फलानाम्।
आशेयमाकाशतरोः प्रसूनात् प्रथीयसी स्वादुफलप्रसूतौ॥

इति वृद्धोक्तेः, "एष[२] पुरुषोऽन्नरसमयः" इति श्रुतेश्च। एतद्देहात्मदर्शनं चार्वाक दर्शननाम्ना जगति सुप्रसिद्धम्। तच्च न केवलं तत्रैव परिसमाप्तम्, किन्तु इन्द्रियात्म-मन आत्म-प्राणात्मदर्शनाद्यात्मना बहुधा विततम्। मतमिदमुत्तरोत्तरं विचारसौक्ष्म्यक्रमेण स्कन्ध पञ्चकात्म-क्षणिकविज्ञानात्म-शून्यात्म-इत्यादिबहुविधबौद्धदर्शनात्मना द्रव्यपर्यायोभयात्मकात्मने नेकान्तवादिजैनदर्शनाद्यात्मना च जगति प्रसारं प्रापत्।

किन्तु वैदिकदर्शनप्रणेतारो महर्षयस्तत्र सर्वत्र— [३]"शरीरदाहे पातकाभावात् [४]पूर्वाभ्यस्तस्मृत्यनुबन्धाज्जातस्य हर्षभयशोकसम्प्रतिपत्तेः, [५]प्रेत्याहाराभ्यासकृतात् स्तन्याभि लाषात्, [६]वीतरागजन्मादर्शनात्" इत्यादिसूत्रोक्तरीत्या दोषान् प्रपश्यन्तोऽतिरिक्तनित्यात्म वादव्युत्पादकानि विभिन्नानि दर्शनानि निर्ममिरे।

वैदिकदर्शनप्रणेतारो महर्षयोऽपि तत्तत्समये जनमनस्सु निरूढपदानां नानावि मिथ्याज्ञानानां निराकरणाय विभिन्नविधानि तत्त्वज्ञानान्युपदिदिशुः। एवञ्च यादृशविषय

---

१. प्रबोधचन्द्रोदये ६८ पृष्ठ उदाहृतः २।१६।
२. तैत्तिरीयोपनिषत् २।१।
३. न्यायसूत्रम् ३।१।४।
४. न्यायसूत्रम् ३।१।१९।
५. न्यायसूत्रम् ३।१।२२।
६. न्यायसूत्रम् ३।१।२५।

विशेषनिरूपणे तत्तच्छास्त्राणां तात्पर्यम्, तत्तदर्थे तेषां प्रामाण्यमप्रतिबद्धम्। अत एव साङ्ख्यप्रवचनभाष्यकारैरीश्वरनिराकरणे साङ्ख्यस्य न परमं तात्पर्यमिति द्योतयद्भिरुक्तम्—

[१]"साङ्ख्यशास्त्रस्य तु पुरुषार्थतत्साधनप्रकृतिपुरुषविवेकावेव मुख्यो विषयः" इति।

एवमेव प्रमाणादिहेत्वाभासान्तपदार्थनिरूपणद्वारेतरभिन्नत्वेन नित्यात्मानुमाने चक्षुरादीन्द्रियाणां तैजसत्वादिभौतिकत्वव्यवस्थापने न्यायशास्त्रस्य परमं तात्पर्यम्। इमे हि पदार्था न्यायशास्त्रमुपदिशद्भिरुक्ताः[२], अन्यैश्च परिगृहीताः। अत एव च ब्रह्मसूत्रभाष्ये[३] [४]दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानां कार्यकारणभावः पूज्यपादैः श्रीशङ्कराचार्यैः परिगृहीतः, ऋषिप्रवरस्य श्रीगौतमस्याचार्यत्वञ्च समादरेण [५]स्वीकृतम्। [६]"एतेन योगः प्रत्युक्तः" इति वेदान्तसूत्रे शाङ्करभाष्यादौ च योगस्यापि यमनियमादिविभूत्यादिनिरूपणे परमं तात्पर्यं तदंशे प्रामाण्यमपि न तु प्रासङ्गिकमहत्तत्त्वादिनिरूपण इत्युक्तम्, व्याकृतञ्च भामत्यां श्रीवाचस्पतिमिश्रैः—

"[७]न चैतानि योगशास्त्राणि प्रधानादिसद्भावप्रतिपादनपराणि, किन्तु योगस्वरूपतत्साधनतदवान्तरफलविभूतितत्परमफलकैवल्यव्युत्पादनपराणि। तच्च यत्किञ्चिन्निमित्तीकृत्य व्युत्पाद्यमिति प्रधानं सविकारं निमित्तीकृतम्, न तु तद्विवक्षितम्" इति।

स्वीकृतञ्चासनस्य महत्त्वम् "[८]आसीनः सम्भवात्" इति सूत्रे तद्भाष्यादौ च।

किन्त्वात्मविषयकविचारे प्रवृत्ते श्रीमदुदयनाचार्यैर्वेदान्तदर्शनस्यैव तन्निरूपणे प्रामाण्यं स्वीकुर्वद्भिः स्वस्य च प्रमाणादीनां निरूपण एव प्रामाण्यं प्रकटयद्भिः—

[९]"तदास्तां तावत्, किमार्द्रकवणिजो वहित्र चिन्तयति" इत्युक्तम्।

---

१. साङ्ख्यप्रवचनभाष्यम् १।१।१।
२. न्यायसूत्रे प्रोक्ताः १।१।१।
३. ब्रह्मसूत्रशाङ्करभाष्ये १।१।४।
४. न्यायदर्शने १।१।२ सूत्रोक्तानाम्।
५. "तथा चाचार्यप्रणीतं न्यायोपबृङ्हितं सूत्रम्" इत्यादिना १।१।४ ब्रह्मसूत्रभाष्ये।
६. ब्रह्मसूत्रम् २।१।३।
७. तत्रैव भाष्ये भामतीटीका।
८. ब्रह्मसूत्रम् ४।१।७।
९. आत्मतत्त्वविवेके, पृ० २२३।

व्याख्यातञ्च नारायणीटीकायाम्—

[१]"वेदान्तसिद्धान्तचिन्तायां नास्तिकानामनधिकारात्, कृतं तच्चिन्तया" इति।

अन्यत्रापि—[२]"आयातोऽसि मार्गेण" इत्यभिहितम्। व्याख्यातञ्च तत्र—

[३]"वैदिकेन मायावादिमार्गेणेत्यर्थः" इति।

उपरिष्टाच्चाचार्येण वेदान्तनये महती श्रद्धा प्रदर्शिता—

[४]न ग्राहभेदमवधूय धियोऽस्ति वृत्ति-
स्तद्बाधने बलिनि वेदनये जयश्रीः।

इत्यादिकं वदता। तत्र नारायणी—[५]"वेदनये वेदानुसारिणि अनिर्वचनीयसिद्धान्तन्याये जयश्रीर्भवति" इति।

आचार्यैरेव किरणावल्याख्यवैशेषिकग्रन्थे—[६]"वेदान्तिनामपि अविद्यायां निवृत्तायां केवलमात्मैवापवर्गे वर्तत इति मते न नो विवादः" इति घोषयद्भिरेतद्विषये न केवलं स्वस्य, अपि तु वैशेषिकतन्त्रस्याप्यद्वैते न विवाद इति स्फुटीकृतम्।

कन्दलीकारा अपि—

[७]ध्यानैकतानमनसो विगतप्रचाराः
पश्यन्ति यं कमपि निर्मलमद्वितीयम्।
ज्ञानात्मने विघटिताखिलबन्धनाय
तस्मै नमो भगवते पुरुषोत्तमाय॥

इति मङ्गलश्लोके परमात्मनोऽद्वितीयत्वं केवलज्ञानरूपत्वञ्च वदन्तोऽद्वैतपक्षमेव समाश्रयन्ति।

[८]"ॐ नमः सर्वभूतानि विष्टभ्य परितिष्ठते" इत्याद्यनुमितिग्रन्थस्थदीधितिकार-मङ्गलश्लोकमद्वैतवादं विहाय व्याकर्तुमशक्यत्वेन श्रीगदाधरभट्टाचार्यैरपि [९]"अथवा भट्ट-मतस्यैवात्र परिष्कृतत्वात्" इत्याद्युक्तम्। भट्टमतेनात्राद्वैतमेव विवक्षितमिति।

---

१. अत्रैव नारायणीटीका।
२. आत्मतत्त्वविवेके, पृ० २२१।
३. तत्रैव नारायणीटीका।
४. आत्मतत्त्वविवेके, पृ० २३०।
५. तत्रैव नारायणीटीका।
६. किरणावली, पृ० ४८–४९।
७. प्रशस्तपादभाष्यन्यायकन्दली, पृ० १।
८. अनुमितिचिन्तामणेर्दीधितिटीकायां प्रथमो मङ्गलश्लोकः।
९. तत्रैव गादाधरीटीका।

मीमांसकप्रवरैश्च—

[1]इत्याह नास्तिक्यनिराकरिष्णुरात्मास्तितां भाष्यकृदत्र युक्त्या ।
दृढत्वमेतद्विषयस्तु बोधः प्रयाति वेदान्तनिषेवणेन ॥

इत्यादिकं वदद्भिरात्मनित्यत्वमात्रस्थापनद्वारा केवलं नास्तिक्यनिराकरण एव स्वीयपरमतात्पर्यमुद्घोषयद्भिरात्मनः सम्यङ्निरूपणे वेदान्तदर्शनस्यैव परमतात्पर्यं प्रामाणिकत्वञ्चेति स्वीकृतम् ।

तथा च वैदिकदर्शनानां सर्वेषामपि सोपानभेदेनाधिकारिभेदेन वोपयोगः प्रामाण्यञ्चेत्यत्र नास्ति स्तोकतरोऽपि सन्देहः । अत एव—

द्वौ क्रमौ चित्तनाशस्य योगो ज्ञानं च राघव ।
योगस्तद्वृत्तिरोधश्च ज्ञानं सम्यगवेक्षणम् ॥
[2]असाध्यः कस्यचिद्योगः कस्यचित्तत्त्वनिश्चयः ।

इत्यादिना योगवासिष्ठे योगज्ञानयोरधिकारिभेदेनावश्यकत्वमुपदिष्टम् । अतश्च न्यायशास्त्रस्यापि प्रामाण्यं वेदान्तशास्त्रे श्रीगौडब्रह्मानन्दस्वामिभिरपि स्वीकृतम् । उक्तञ्च—

"[3]ननु देहाद्यधिष्ठानतयाऽऽत्मज्ञानं कथं शुद्धात्मसाक्षात्कारं प्रति हेतुः ? तस्याप्रमाणत्वादिति चेत्, उच्यते—तादृशविवेकज्ञानोत्तरं देहादीनां हेयतया केवलात्मन एव जिज्ञास्यत्वात् । तेनैव प्रतिबन्धादहङ्काराद्यभाने साक्षिमात्रविषयकसौषुप्तवृत्तिरिवाविद्यावृत्तिविशेषरूपस्तादृशविवेकज्ञानोत्तरं त्वम्पदार्थशोधकस्मृत्या मनोवृत्तिरूपो वा शुद्धात्मसाक्षात्कारः" इति ।

अत एव च नानात्मैकात्मत्वयोर्विरोधं निराकुर्वद्भिः साङ्ख्यप्रवचनभाष्यकारैः सर्वेषां वैदिकदर्शनानां प्रामाण्यं कण्ठरवेणोक्तम्—

[4]"एतेन श्रुतिस्मृतिप्रसिद्धयोर्नानात्मैकात्मत्वयोर्व्यावहारिकपारमार्थिकभेदेनाविरोधः" इति, [5]"तस्मादास्तिकशास्त्रस्य न कस्याप्यप्रामाण्यं विरोधो वा स्वस्वविषयेषु सर्वेषामबाधादविरोधाच्चेति" इति च ।

---

१. मीमांसाश्लोकवार्त्तिकस्य पञ्चमसूत्रस्थात्मवादेऽन्तिमोऽयं श्लोकः, पृ० ७२७–२८ ।

२. योगवासिष्ठगतनिर्वाणप्रकरणे १०।८ ।

३. सिद्धान्तबिन्दुन्यायरत्नावल्यां प्रथमश्लोकव्याख्याने, पृ० ४६ ।

४. साङ्ख्यप्रवचनभाष्यम् १।१।१, पृ० ६ ।

५. तत्रैव ।

इममेवार्थं द्योतयन्ति वार्त्तिककारपादाः श्रीसुरेश्वराचार्याः—

[१]यदर्थं सर्वशास्त्राणां प्रवृत्तिरतिविस्तरा ।
आत्मज्ञानावतारार्थः सर्वशास्त्रसमुद्यमः ॥
संसारोच्छेदमेवामी फलं शास्त्रकृतोऽब्रुवन् ।
स्वत एव मनुष्याणां प्रकृतिर्भोगसिद्धये ॥
तत्रानुवादि शास्त्रं स्यान्निवृत्तावेव तन्मितिः ।
विरोधः सर्वशास्त्रेषु पदार्थानां व्यवस्थितौ ॥
युक्तस्तात्पर्यहीनत्वात् श्रुतौ सृष्टिविगानवत् ।
अपि वात्स्यायनादीनां शास्त्राणां द्वारभेदतः॥
प्रामाण्यमविरुद्धं स्यादैकात्म्यज्ञानजन्मने ।

इत्यादिकं वदन्तः ।

तथैव तत्तन्मतासाधारणविभिन्नविषयमादाय सर्वेषामेव मतानां प्रामाण्यमविरोधञ्च ज्ञापयन्ति भगवत्पादाः—[२]"न च प्रमाणं प्रमाणान्तरेण विरुध्यते, प्रमाणान्तराविषयमेव हि प्रमाणान्तरं ज्ञापयति" इत्यादिकं प्रतिपादयन्तः ।

एवञ्च वैदिकदर्शनानि परस्परविरुद्धतयाऽप्रामाणिकानीत्यवैदिकानामाक्षेपश्चेत्, निरस्तः; अधिकारिभेदेन सोपानभेदेन वा सर्वेषामपि प्रामाण्यस्याप्रत्यूहत्वात् ।

तेषु च सर्वेषु वेदप्रामाण्याभ्युपगन्तृत्वं वैदिकत्वमिति प्राचीनवचनाद् वेदस्य परमं प्रामाण्यमभ्युपगम्यते । तेषां मध्ये साङ्ख्ययोगन्यायवैशेषिका लौकिकानुभवमधिकृत्य पदार्थव्युत्पादने प्रवृत्तास्तर्कप्रधानाः, मीमांसावेदान्तौ तु श्रुतिवाक्यमधिकृत्य प्रवृत्तौ श्रौताविति ।



१. बृहदारण्यकोपनिषत् १।४।७ ॥ शाङ्करभाष्यवार्त्तिकम्, पृ० ५१३ ।
२. बृहदारण्यकोपनिषच्छाङ्करभाष्यम् २।१।२०, पृ०१२० ।

# शक्तिविशिष्टाद्वैतदर्शनम्

डॉ० टी० जी० श्रीसिद्धप्पाराध्यः संस्कृताध्यापकः,

मानसगंगोत्री, मैसूरविश्वविद्यालयः, मैसूर ।

जगति विद्यमानं सर्वं वस्तुजालं शक्तिविशिष्टमेव दृश्यते । जगच्च पञ्चभूतात्मकमिति सर्वानुभवसिद्धम् । पृथिवी, आपः, तेजः, वायुः, आकाशमित्येतानि पञ्चभूतानि । पृथिव्यां सर्वजीवानामितरभूतानां च धारणात्मिका शक्तिर्दरीदृश्यते । एवमेवाप्स्वाप्यायनशक्तिः, तेजसि दहनशक्तिः, वायौ चलनशक्तिः, आकाशे व्यापनशक्तिश्च विराजते । जडभूतानि विहाय चेतनभूते जीववर्गेऽपि बुद्धिशक्तिर्दृश्यते । एवमेव सूर्ये प्रकाशनशक्तिः, चन्द्रे आह्लादनशक्तिश्च दृश्यते । एतानि परमात्मनः शरीरस्थाने परिकल्पितानि । श्रीरेणुकाचार्या अगस्त्यमहर्षये शिवतत्त्वोपदेशसमये परमात्मनः पृथिव्याद्यष्टमूर्तित्वं प्रतिपादयन्ति—

पृथिव्याद्यष्टमूर्तित्वमीश्वरस्य प्रकीर्तितम् ।
तदधिष्ठातृभावेन न साक्षादेकभावतः ॥

( सि० शि० १०।४९ )

एतादृशशरीरस्य शक्तिविशिष्टत्वात् तस्मिन्नन्तर्नियामकत्वेन वसन् परमात्मापि शक्तिविशिष्ट एवेत्यनुभविभिः प्रतिज्ञायते । शक्तिविशेषरहितस्य परमात्मनः शक्तिविशिष्टजीव जगन्निर्माणे सामर्थ्यं न संभवति । शक्तिरहितः परमात्मा शक्तिसहितं वस्तुजालं जीववर्गं च कथं सृजेत् ? शक्तिविशिष्टत्वादेव परमात्मा सर्वस्य जगतः पतिः, प्रभुरिति विद्वद्भिः पामरैश्चाङ्गीक्रियते ।

तदीया परमा शक्तिः सच्चिदानन्दलक्षणा ।
समस्तलोकनिर्माणसमवायस्वरूपिणी ॥
तदिच्छयाऽभवत् साक्षात् तत्स्वरूपानुकारिणी ।
स शम्भुर्भगवान् देवः सर्वज्ञः सर्वशक्तिकः ॥

( सि० शि० २।१२-१३ )

जगत्सृष्टिविचारं कथयन्तः श्रीरेणुकभगवत्पादाः परमात्मानं सर्वज्ञं सर्वशक्तिकं च निर्दिशन्ति । एतादृशशक्त्यभावे स विचित्रशक्तिकं जगद् निर्मातुं न शक्नोत्येव । अतः परमात्मा शक्तिविशिष्ट एव वर्तत इति सिद्धान्तितं प्राक्तने त्रेतायुगे श्रीमद्वी रेणुकाचार्यवर्यैः ।

इयं च परमा शक्तिः परमात्मनि स्वाभाविकीति श्वेताश्वतरश्रुतिर्निस्संशयं ब्रवीति—

"पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च।"

( श्वेता० ६-८ )

एतन्मन्त्रार्थपर्यालोचनेन परमात्मनि शक्तिः स्वभावसिद्धा, ज्ञानक्रियादिरूपेणानन्तप्रकारा च वर्तत इति सिध्यति। मन्त्रे प्रयुक्तम् 'स्वाभाविकी' इति पदं शक्तिनित्यत्वं घण्टाघोषतया प्रकाशयति। अमुमेव विषयमियमेव श्रुतिरस्मिन् सन्दर्भे—

यदा तमस्तन्न दिवा न रात्रिर्न सन्न चासञ्छिव एव केवलः।
तदक्षरं तत्सवितुर्वरेण्यं प्रज्ञा च तस्मात् प्रसृता पुराणी॥

इत्युद्घोषयति पुराणी अनादिसंसिद्धा प्रज्ञा चिच्छक्तिः परमात्मनः सकाशात् प्रसृता। क्रियाशक्त्याद्यनन्तरूपेण जगत्सृष्टिसमये बहिराविष्क्रियत इति श्रुतावस्यां शक्तिविकासः स्फुटमेव निवेद्यते।

"आखुस्ते रुद्र पशुस्तं जुषस्वैष ते रुद्रभागः सह स्वस्राम्बिकया तं जुषस्व" ( १।८।६ ) एवं यजुर्वेदतैत्तिरीयसंहिता परमात्मनि शक्तिनित्यत्वं सम्यक् प्रतिपादयति।

"नमः सोमाय च रुद्राय च" ( तै० सं० ४।५।८ ) अयं श्रीरुद्रमन्त्रोऽपि परमात्मानमुमारूपशक्तियुक्तमिति बोधयति। एवंरीत्या अनेकानि श्रुतिवाक्यानि परमात्मनि शक्तिनित्यत्वं समवायसंबन्धेन तद्वृत्तित्वं च प्रतिपादयन्ति। एवं समस्तलोकनिर्माणे शक्तेः समवायस्वरूपं तदिच्छया साक्षात् तत्स्वरूपानुकरणं च श्रीरेणुकाचार्यैर्यदुपपादितं तत् सप्रमाणमेव परिशोभते।

अस्याश्च शक्तेः स्वरूपं सिद्धान्तशिखामणावेवं प्रतिपाद्यते—

यथा चन्द्रे स्थिरा ज्योत्स्ना विश्ववस्तुप्रकाशिनी।
तथा शक्तिर्विमर्शाख्या प्रकाशे ब्रह्मणि स्थिरा॥
अन्तःकरणरूपेण जगदङ्कुररूपतः।
यस्मिन् विभाति चिच्छक्तिर्ब्रह्मभूतः स उच्यते॥

( २०।२७।२२ )

समस्तवस्तुप्रकाशिका चन्द्रिका चन्द्रे यथा स्थिरतया वर्तते, तथा चराचरात्मकसकलपदार्थप्रकाशिका विमर्शशक्तिः प्रकाशरूपे परमात्मनि स्थिरतया प्रकाशते। इयं च शक्तिः परमात्मनि मूलाहङ्काररूपेण सूक्ष्मजगद्रूपेण च विराजते। इयमेव विमर्शशक्तिः चिच्छक्तिरिति कथ्यते। एतादृशशक्तिविशिष्ट एव परमात्मा भवरोगनिवारकत्वाद् रुद्र इति, सर्वेषां मङ्गलकरत्वात् शिव इति, विश्वव्यापकतया बृहदाकारतया च परब्रह्मेति चाख्यायते।

इयमेव विमर्शाख्या चिच्छक्तिः सच्चिदानन्दस्वरूपिणी परमात्मनो विनोदसमये विचित्रस्य जगतो निर्माणाय त्रिगुणात्मकत्वेन मायानाम्ना बहिरागत्य प्रकाशते। पूर्वाचार्या मायाशब्दस्य निर्वचनम् "मं शिवम् अयति स्वभावतः प्राप्नोतीति माया" एवं कथयन्ति। "मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्" (४-१०) इतीयमपि श्रुतिः परमात्मानं मायारूपशक्तिविशिष्टमेव वर्णयति। मायी महेश्वरः परमात्मा, तदीयं जगद् मायावदेव सृजति।

मं शिवं परमं ब्रह्म प्राप्नोतीति स्वभावतः।
मायेति प्रोच्यते लोके ब्रह्मनिष्ठा सनातनी॥

एवं सिद्धागमो मायापदार्थं प्रकाशयति।

यदा शक्तिविशिष्टं परब्रह्म "बहु स्यां प्रजायेय" (६।२।७) इति छान्दोग्यश्रुत्यनुसारेण सृष्ट्युन्मुखं भवति। तदानीं तन्निष्ठा विमर्शाख्या चिच्छक्तिरिच्छाशक्तिरूपेण परिणमते। अस्या एव शक्तेर्विलासोऽयं प्रपञ्चः।

अनादिनिधनात् शान्तात् शिवात् परमकारणात्।
इच्छाशक्तिर्विनिष्क्रान्ता ततो ज्ञानं ततः क्रिया॥
तत्रोत्पन्नानि भूतानि भुवनानि चतुर्दश॥

इति शिवागमवचनप्रामाण्येनोत्पत्तिनाशरहितात् शान्तात् परमकारणात् परशिवब्रह्मणः सकाशादिच्छाशक्तिः प्रागाविर्भूता, तदानीं तदन्तरङ्गभूता ज्ञानशक्तिः, बहिरङ्गभूता क्रियाशक्तिश्चाविष्कृता। अयं च निराकारः परमात्मा ज्ञानशक्तौ मिलित्वा सर्वज्ञताभिमानेन शिव इति व्यवह्रियते। तदानीमेव स क्रियाशक्तौ मिलित्वा सर्वकर्तृत्वाभिमानेन शक्तिरिति च कथ्यते, "यथोर्णनाभिः सृजते गृह्णते च" (१-१-२) इति मुण्डकश्रुतिः परमात्मानं प्रपञ्चस्याभिन्ननिमित्तोपादानतया निर्दिशति। शक्तिविशिष्टो निराकार एव परमात्मा सृष्टिकाले शिवशक्तिरूपतया स्वीयचिच्छक्तियोगेन परिणमते।

अयमेव निराकारः परमात्मा क्रियाशक्तेरधिकांशेऽभिमानपूर्वकं प्रविश्य विष्णुर्भवति। ज्ञानशक्तेरधिकांशे साभिमानं प्रविश्य ब्रह्मरूपेण परिणमते। स एव ज्ञानक्रियाशक्त्याधिक्ययोः समावस्थायामभिमानेन प्रविश्य कालरुद्रो भवति। एवं शक्तिसंबन्धादेव परमात्मा त्रिमूर्तिरूपं भजते। "ब्रह्मविष्णुरुद्रेन्द्रास्तं प्रसूयन्ते" इति श्रुतिरपि त्रिमूर्तीनां परमात्मजन्यत्वं प्रतिपादयति।

एवमव्याजप्रेममयः सत्यज्ञानरूपश्च परमात्मा अमूर्तोऽपि स्वांशभावानां जीवानां प्रलयेऽव्यक्ततया स्वस्मिन् विद्यमानानां शक्तिविकासार्थं देहादिसकलोपकरणप्रदानाय च पञ्चविधानि मूर्तरूपाणि परिगृह्णाति। शिवः, शक्तिः, रुद्रः, विष्णुः, कालरुद्र इत्येतैर्दिव्यमूर्तरूपैर्निराकारः परमात्मा जगतोऽनुग्रहम्, तिरोधानम् ( प्रलोभनम् ), अभिमानप्रलयम्, रक्षणम्, सृष्टिं च लीलयैव निर्वहन् स्वीयचिच्छक्त्या सह स्वात्मानन्दं चानुभवन् विराजते। इममेवाभिप्रायम् "द्वे वाव ब्रह्मणो रूपे मूर्तं चामूर्तं च" इति बृहदारण्यकश्रुतिः प्रतिपादयति। मूर्तरूपं लोकानुग्रहलीलायै, अमूर्तरूपं स्वात्मानन्दानुभवाय च परमात्मा स्वीयस्वातन्त्र्यमहिमा एकदैव स्वीकरोति। एतादृशमवस्थाद्वयं परमात्मनि सहजतया सर्वदा विराजत एव। "लोकवत्तु लीलाकैवल्यम्" इति सूत्रेऽपि भगवान् बादरायणो लोकदृष्टान्तेन परमात्मनि भक्तानुग्रहलीलावस्थां स्वात्मारामकैवल्यावस्थां च प्रतिपादयति। लीलैव वैभवम्, कैवल्यं च वैराग्यमेव। एवं परमात्मनि वैभववैराग्ययोः सत्त्वात् तयोर्द्वयोरपि मानवशक्तिविकासाय आवश्यकत्वाच्च तत्स्थिरीकरणार्थं स एव परमात्मा गुरुजङ्गमात्मकतया परिणमते। वैभवप्रकाशको गुरुः, वैराग्यनिर्देशकश्च निराभारिनामको जङ्गम इति मूर्तामूर्तात्मकमवस्थाद्वयं परमात्मा स्वांशानां जीवानामुद्धाराय स्वयमेव परिगृह्णाति। एवं च शक्तिविशिष्टः परमात्मा गुरुजङ्गमात्मकेन रूपेण भक्तानुग्रहलीलां निर्वहन्नमूर्तया स्थित्या आत्मानन्दं चानुभवन् सर्वेषामस्माकं वैराग्ययुक्तं वैभवपूर्णं दिव्यमादर्शं प्रकाशयति। अत एव शक्तिविशिष्टस्य निर्विकारस्य परमात्मनः साकारनिराकाररूपमवस्थाद्वयमपि सत्यमेवेति श्रुतावङ्गीक्रियते।

जगत्सृष्टये पञ्चविधानि दिव्यमूर्तरूपाणि पूर्वोक्तान्याददानः परमात्मा जगद्रक्षणाय गुरुजङ्गमात्मकतया जगति विहरंश्च परिशोभते। गुरोर्वैभवं जङ्गमस्य वैराग्यं च मानवैरवश्यं जीवितकालेऽधिगन्तव्यम्। गुरुजङ्गमरूपेण विहरन् परमात्मा यैर्नाद्रियते, ते परमात्मनोऽनुग्रहं न भजन्ते।

एवं च जगद्व्यापारनिर्वाहाय शक्तियोगात् स्वीकृतपञ्चरूपः परमात्मा शक्तिविशिष्ट इत्यनुभविभिर्यदुच्यते तद् युज्यत एव। प्रलये शक्तिः सूक्ष्मरूपतया विद्यमानापि सृष्टिकाले विकासरूपं भजते। प्रलयकालेऽपि मूलाहङ्काररूपेण जगदङ्कुररूपेण च शक्तेः सत्त्वात् परमात्मा सर्वदा शक्तिविशिष्ट एव वर्तते।

अत्रत्यं शक्तिपदं सच्चिदानन्दरूपिणीं चिच्छक्तिं सत्त्वरजस्तमोगुणात्मिकां मायाशक्तिं च द्योतयति। चिच्छक्तिस्तु परमात्मनः प्राणरूपिणी, अविनाभावसंबन्धेन तस्मिन् विराजते

मायाशक्तिस्त्वचेतना त्रिगुणात्मिका परमात्मांशभूतानां जीवानां बन्धकारिणी वर्तते; तथापि सा परमात्मन इच्छानुरोधेन स्वीयं कार्यं निर्वहति। भगवदिच्छा च जीवकर्मानुसारिणी। यो जीवः स्वात्मानं भगवदंशं ज्ञात्वा स्वीयं देहं भगवत्सेवायै मनश्च भगवद्ध्यानाय विनियुङ्क्ते, स स्वशक्तिभूतायाः चित्ताख्याया बुद्धेर्विकासमधिगच्छति। भगवत्प्राणभूता चिच्छक्तिरेवांशतः परित्यक्तस्वीयचैतन्या मायाप्रकृत्यपरनामधेया बुद्ध्याख्या चित्तशक्तिरिति व्यवह्रियते। यथा परमात्मा चिच्छक्तिविशिष्टः, तथा जीवात्मा चित्तशक्तिविशिष्टो वर्तते। एवं च चिच्छक्तिविशिष्टेन परमात्मना चित्तशक्तिविशिष्टस्य जीवात्मनः प्रकृत्या भेदे विद्यमानेऽपि स्वरूपज्ञानविशिष्टक्रियात्मिकया भक्त्या निरन्तरोपासनेन क्रमशो भेदनिवृत्त्या अभेदोऽधिगम्यते। चित्तशक्तिविशिष्टस्य जीवस्य ज्ञानक्रियासमन्वयात्मिकाया भक्तेर्महिम्ना चिच्छक्तिविशिष्टेन परमात्मना अद्वैतं सामरस्यमत्रैवास्मिन्नेव देहेऽनुभूयते। भक्तिः किं न करोति ? शक्त्या मानवस्य देवांशस्य जगति प्रवृत्तिः सञ्जाता। भक्त्या तस्य मानवप्रकृतिर्निवर्त्यते। मानवप्रकृतिः सत्त्वरजस्तमोरूपिणी भक्तेः प्रभावेण सच्चिदानन्दरूपतया परिणता दैवीमवस्थामाप्नोति। यदा प्रकृतेरेव परिणामो भक्त्याचरणेन सञ्जायते, तदा मानवोऽनायासेन देव एव संपद्यते। स वस्तुतो देव एवासीत्, तथापि तस्मिन् देवत्वं वास्तवमप्यव्यक्तमासीत्। चिदंशभूताया भक्तेर्महिम्ना मानवेऽन्तर्हितं शिवत्वमभिव्यज्यते।

एतादृशशिवत्वप्रकाशाय देहेन्द्रियमनोबुद्ध्यहङ्काररूपिणी चित्ताख्या मायानाम्नी प्रकृतिः सम्यक् सहकरोति। एतत्सहकारेणैव जीवोऽस्मिन्नेव प्रसादकाये निर्मले हृदयाकाशे स्वस्मिन् सूक्ष्मरूपतया स्थितं शिवं विज्ञाय तस्मिन् विलीय आनन्दमनुभवति। एवं प्रकृत्या भिन्नयोः शिवजीवयोरद्वैतानन्दानुभवात् शक्तिविशिष्टाद्वैतदर्शनं भेदाभेदमतमिति अनुभविभिरनुमोद्यते—

"बीजे यथाङ्कुरः सिद्धः तथात्मनि शिवः स्थितः।" (४।३५) इति।

सिद्धान्तशिखामणिर्जीवे सूक्ष्मरूपतया शिवस्य अवस्थानं प्रतिपादयति। जीवोऽपि तदंशः, अनादिमायाशक्तिसंबन्धाद् भिन्नः, ईश्वरानुग्रहरूपेण शक्तिपातेन वस्तुस्थितिमधिगच्छन् मायया अपहृतैश्वर्यः स्वीयशक्तेरधिगमाय प्रयतते। चिदात्मकयोर्जीवशिवयोर्मायाशक्तिवशाद् भिन्नयोरपि चिद्रूपभक्तियोगात् संसारनिवृत्त्या अभेद इहैवानुभूयते। ईश्वरो जीवस्य कर्मानुसारेण प्रेरको भूत्वा तस्यैव हृदये निवसति। एतदविज्ञायैव मानवो मायापाशबद्धो भयशोकमोहादिकमनुभवन् संसारीति व्यवह्रियमाण आस्ते। स्वस्मिन् विद्यमानेश्वरविज्ञानेन मानवः स्वीयप्रकृत्या तदा तदा दीयमानानि दुःखमिश्राणि सुखानि तदानीमेव स्वान्तरवस्थिताय परमात्मने भक्त्या समर्प्य तान्येव सुखदुःखानि प्रसादभावनया समदृष्ट्या

स्वीकुर्वन् नित्यसुखी संपद्यते । इयमेव कृतकृत्यता नाम जीवस्यास्मिन् जन्मनि । नो
स देहवियोगसंयोगरूपे संसारचक्रे संचरन्नेव वर्तेत । एतादृशं परिभ्रमणं परिहृत्य
स्वीयानन्दे निषण्णं करोति शक्तिविशिष्टाद्वैतदर्शनम् ।

एतादृशमहत्कार्यसाधनाय न केवलं शिवः, न केवलं शक्तिश्च प्रभवेत् । केवल
मायाशक्तेर्जडत्वात् प्रवृत्तिरूपत्वाच्च तस्या जीवदुःखनिवारणं न शक्यते । केवलस्य शिव
सर्वज्ञत्वात् सर्वव्यापकत्वाद् निर्मलत्वात् सर्वकर्मराहित्याच्च तेन सह मलकर्मयुक्तस्य जीव
क्यरूपमद्वैतं न साध्येत । अतः शक्तिविशिष्ट एव शिवः स्वीयशक्तिमहिम्ना जीवे वि
मानान् मलकर्मदोषान् दूरीकर्तुं शक्नोति । अतो जीवः शिवाद् नात्यन्तं भिन्नः, न वा
मभिन्नश्च वर्तते । यत्र शिवजीवयोर्भेदो वर्ण्यते श्रुतौ, स बद्धावस्थायामन्वेतव्यः ।
तयोरभेदो वर्ण्यते, स बुद्धावस्थायामन्वेतव्यः । संसारदशायां यो बद्ध आसीत्, स
मोक्षदशायामत्रैव शरीरे बुद्धो भवति । एवं कालभेदेन अवस्थाभेदेन च शिवजीवयोर्भेदा
व्यवस्थाप्येते । अतस्तयोरेकत्रावस्थाने न किञ्चिदप्यनौचित्यं वर्तते । नदीसमुद्रदृष्टान्
श्रुतिः शिवजीवयोर्भेदमभेदं च यथार्थतया समर्थयति । नदी तावत् समुद्रादेवोत्पन्ना,
किरणैराकृष्टानि, समुद्रजलबिन्दुवृन्दान्येव वियति मेघरूपेण मिलित्वा वायुवेगाद्
जलबिन्दुरूपेणैवाधः पतन्ति । तान्येव जलबिन्दुवृन्दानि भूमावेकत्र संभूय नदी
प्रवहन्ति । समुद्रजन्यामिमां नदीं समुद्रमिति न कोऽपि कथयति । नद्यां नदीत्वं वैयक्ति
तया सत्यमेव वर्तते । तथैव शिवादुत्पन्ने जीवे वैयक्तिकतया जीवत्वं सत्यमेव । प्र
भिन्नम्, अनीशया मुह्यमानम्, भीतं शोचन्तं च जीवं शिवमिति न कोऽपि वद
यतो नदी समुद्रादुत्पन्ना, अतस्तस्याः सर्वापि दृष्टिः स्वगम्यस्थाने समुद्र एव संपत
यदा सा तत्र गच्छति, तदैव सा विश्रान्ता भवति । तदानीमेव सा स्वीयनामरूपा
परित्यज्य समुद्र इत्येव व्यवह्रियते । तथैव जीवो यदा शिवाय स्वीयां प्रकृतिं विनिवु
स्वात्मानमपि समर्पयति, तदा स भेदनिवृत्त्या शिवेनाभेदं समश्नुते । शिवैक्यमनुभ
जीवः शिवानन्दे विलीनः संछिन्नमलपाशः, ज्ञानाग्निदग्धकर्मा लोकहिताय अनासक्त एव
कुर्वन् दग्धपट इव फलाभिसन्धिरहितो विराजते ।

एतादृशाद्भुतकार्यरचनायां परमात्मनो निर्विकारस्य विकारदोषनिवारणार्थं श
विशिष्टत्वम्, शक्त्या सह तस्य सामरस्यं चावश्यमङ्गीकरणीयमिति श्रुत्या युक्त्या अनुभ
च विज्ञायते । शक्तेः शक्तिविशिष्टशिवस्य चाद्वैतं सामरस्यमस्मिन् दर्शने सम्यग् बोध्य
एवं च शक्तिविशिष्टाद्वैतमिति दर्शननाम अन्वर्थतया परिशोभते । विस्तरस्तु लेख
शक्तिविशिष्टाद्वैतदर्शनाख्ये ग्रन्थे समवलोकनीयः ।

—o—

# शून्यवादव्याख्यारूपा नूतना कारिका

डॉ० रामकुमारचतुर्वेदः,
मोतीझील, वाराणसी ।

शून्यमदः शून्यमिदं शून्यात् शून्यमुदच्यते ।
शून्यस्य शून्यमादाय शून्यमेवावशिष्यते ॥

विज्ञाने तथा दर्शनशास्त्रे च प्रसिद्धमिदं यदा साधारणः कश्चिन्नियमः सूत्रबद्धः, कारिकाबद्धो वा क्रियते, तदा तस्य व्यापकत्वं सिध्यति। अत एव शास्त्रेष्वपि परिभाषाया महत्त्वम् । वेदान्तेष्वपि बहूनि सूत्राणि कारिकाश्च सन्ति । "सर्वमिदं खलु ब्रह्म"--

पूर्णमदः पूर्णमिदं पूर्णात् पूर्णमुदच्यते ।
पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते ॥

इत्यादीनि ।

नागार्जुनः शून्यवादस्य माध्यमिकसिद्धान्तस्य वा प्रचारक आसीत् । नागार्जुनस्य स्थितिकालोऽद्यावधि निश्चितो नास्ति, किन्तु तस्य प्रगाढं वैदुष्यम्, पूर्णं पाण्डित्यम्, प्रतिभासम्पन्नत्वं च जगद्विख्यातं वर्तते । अतो हेतोस्तस्य महती कीर्तिश्चिरकालतोऽधुनाप्यक्षुण्णा तिष्ठति स्थास्यति च ।

नागार्जुनस्य विशिष्टरचना 'माध्यमिककारिका' वर्तते । माध्यमिककारिकाया उपरि महत्त्वशालिन्यो वृत्तयः सन्ति । यथा---आचार्यमल्लकृतः 'प्रज्ञा प्रदीपः' एवमाचार्यचन्द्रकीर्तिना विरचिता 'प्रसन्नपदा'नाम्नी टीका च, प्रज्ञापारमिताशास्त्रम्, दशभूमिविभाषाशास्त्रम्, ( दशभूमिसूत्रस्य वृत्तिः ) च महायानसिद्धान्तानां विश्वकोष एव ।

प्रसिद्धेषु शून्यवादाचार्येषु आर्यदेवः ( २००–२२४ ई० ) चतुःशतकनिर्माता बभूव । यत्र धर्मपालेन चन्द्रकीर्तिना च टीका कृता । तथा हेन्त्साङ्ग् नामकेन चीनदेशीयेन विदुषा ( ६५० ईसवीयवर्षस्य समीपे ) अस्य चीनीयभाषायामनुवादः कृतः । चीनीयभाषायामस्याभिधानं 'शतशास्त्रवैपुल्यम्' इति वर्तते । इदं पुस्तकं प्रामाणिकं प्रमेयबहुलं च विद्यते ।

बुद्धिपालितः ( ई० ५ शताब्दीभवः ) प्रमाणभूतेष्वाचार्येष्वन्यतमः। अनेन रचिता माध्यमिककारिकाया वृत्तिरधुना भोटभाषायामुपलभ्यते।

भावविवेकनाम्ना प्रसिद्धः कश्चिदन्य आचार्यो वर्तते। अनेन रचितः प्रज्ञाप्रदीपोऽधुना भोटभाषायामनूदित एवोपलभ्यते। अनेन निर्मिता अन्ये ग्रन्था मध्यमहृदयकारिका, परमार्थसंग्रहः, हस्तरत्नमित्यादयः सन्ति।

आचार्यचन्द्रकीर्तिः ( ६००–६५० ई० ) विश्वविख्यातस्य नालन्दाविश्वविद्यालयस्य मुख्याध्यापकेषु प्रख्यातोऽध्यापक आसीत्। अनेन निर्मिता ग्रन्था इमे—१. माध्यमिकावतारः, २. प्रसन्नपदा, ३. चतुःशतकवृत्तिश्चेति।

आचार्यशान्तरक्षितः ( ८ शताब्दीयः ) नालन्दाविश्वविद्यालयेऽध्यापक आसीत्। अयं च भोटदेशे निमन्त्रितो भूत्वा गतः। अस्य प्रसिद्धं विपुलं च कार्यं 'तत्त्वसंग्रह'-नामकं प्रामाणिकं पुस्तकं विद्यते।

'शून्य'शब्दो ब्राह्मणदर्शनेषूपलभ्यते। अस्यार्थस्तत्र सर्वत्र जगति सकलसत्ता-निषेधो भवति। नागार्जुनात् पूर्वं हीनयानेष्वपि शून्यवादस्य उल्लेख उपलभ्यते। संयुत्त-निकाये कात्यायनवादे शून्यताया उल्लेखोऽस्ति, यतो हि तत्र सदसतोरुभयोरपि निषेधः कृतो वर्तते। चन्द्रकीर्तिना प्रसन्नपदायां प्रदर्शितं यत् प्रज्ञापारमितासूत्रस्य मूलं पूर्वशैला-परशैलानुयायिनोरुभयोरपि मान्यमासीत् ( द्रष्टव्यं कीथरचिते बौद्धदर्शने २१९ पृष्ठे )।

एवं महायानग्रन्थानामवलोकनेन स्पष्टमिदं प्रतीयते यत् प्रारम्भिकं बौद्धदर्शनं प्राधान्येन सर्वास्तिवादेन प्रभावितमपि बीजरूपेण शून्यवादमपि बिभर्ति स्म। शून्य-वादस्य निष्कर्षो नागार्जुनस्य प्रथमायां सप्तम्यां च कारिकायां वर्णितो दृश्यते—

न स्वतो नापि परतो न द्वाभ्यां नाप्यहेतुतः।
उत्पन्ना जातु विद्यन्ते भावाः क्वचन केचन॥

न सद् नासद् न सदसन्न चाप्यनुमानात्मकम्।
चतुष्कोटिविनिर्मुक्तं तत्त्वं माध्यमिका विदुः॥

आचार्यनागार्जुनेन द्विविधा सत्ता स्वीकृता—पारमार्थिकी, सांवृत्तिकी च। तत्र संवृत्तिरपि द्विधा तथ्यसंवृत्तिः, मिथ्यासंवृत्तिश्चेति भेदेन। परमार्थस्त्वितो विलक्षणम्। शून्यं त्रिकालाबाधितत्त्वेन हेतुना परमार्थरूपम्। तच्च योगिजनैरेव प्रत्यक्षीक्रियते।

र्जुनस्य परमसिद्धान्तोऽयमेवास्ति यत् सर्वे धर्माः स्वभावरहिता इति। अस्य परपक्ष-खण्डने तात्पर्यम्। नागार्जुनस्य स्वीयः पक्षः कश्चिन्नास्ति। 'सर्वे धर्माः स्वभावरहिताः' अस्य तात्पर्यं शून्यत्वमेव। यद्धि परमार्थसद् विद्यते, शून्यवादो निषेधस्वरूपः। अनेन सर्वस्य निषेधः सर्वत्र च दोषोद्भावनमेव कृतं वर्तते। अनयैव च पद्धत्या शून्यवादस्य पारमार्थिकी सत्यता प्रतिपादितास्ति।

नागार्जुनमतेन चत्वारि आर्यसत्यान्यपि न सन्ति, प्रतीत्यसमुत्पादः प्रमाणम्, गतिः, गन्ता, गन्तव्यं चेति सर्वं नास्ति। अध्वत्रयम्, द्रष्टा, द्रष्टव्यम्, दर्शनम्, संस्कृतधर्माः, पुद्गलः, त्रिकायवाद इति सर्वमपि नास्ति। तेन तथागतस्यास्तित्वम्, अन्ततो निर्वाण-मपि च निषिद्धम्। एवं शून्यवादो निषेधस्वरूपः। केवलं शून्यमेव तत्र परमार्थसद् विद्यते। अतः—

पूर्णमदः पूर्णमिदं पूर्णात् पूर्णमुदच्यते।
पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते॥

इति वाक्यपद्धत्या—

शून्यमदः शून्यमिदं शून्यात् शून्यमुदच्यते।
शून्यस्य शून्यमादाय शून्यमेवावशिष्यते॥

इत्यस्या नूतनायाः शून्यवादव्याख्याभूतायाः कारिकाया निर्माणं समुचितमेव।



# प्राचीनार्वाचीनपरमाणुविचारपर्यालोचनम्

**श्री बलरामस्वामी, प्राचीनन्यायाचार्यः**

**दर्शनाध्यापकः, श्रीदादूमहाविद्यालये, मोतीडूँगरी, जयपुरम्**

उद्दिश्य परमाणूनां गुणकर्मविवेचनाम् ।
प्राच्यावाच्यविचाराणां क्रियते परिलोचनम् ॥

## किं नाम परमाणुत्वम् ?

अथ परमाणुजिज्ञासा, के नाम परमाणवः, कानि च तेषां गुणकर्माणि ? अत्राहुर्मनीषिणः—परमाणवो नाम लोके सूक्ष्मतमाः पदार्थाः । परमाणुरिति नामधेयमेव तावन्निवेदयति स्वाभिधेयस्य सूक्ष्मतमत्वम् । तथाहि—यः खलु परमतयाऽणुः स एव परमाणुर्नाम । तत्राणुर्नाम अणुत्वपरिमाणवान् पदार्थः । परिमाणं पदार्थेषु मानव्यवहारस्यासाधारणकारणीभूय स्थितः पदार्थनिष्ठो गुणविशेषः । चतुर्धा च तत्—अणुत्वम्, महत्त्वम्, ह्रस्वत्वम्, दीर्घत्वं च । तत्राणुत्वपरिमाणवन्तो हि पदार्था अणवो नाम । अणुष्वपि च ये परमा अणवस्ते परमाणवो नाम ।

परमत्वं हि सर्वोत्कृष्टत्वम् । सर्वातिशायित्वमिति यावत् । यः खल्वतिशेते केनापि धर्मविशेषेण स्वेतरान् सर्वान् पदार्थान्, न चातिशय्यते स्वयं तेन धर्मेण, केनाप्यन्येन, स हि सर्वातिशायी सर्वोत्कृष्टो वा । भवन्ति च लोके पदार्थानां मध्ये केऽपि तथाभूताः पदार्थाः, येऽतिशेरतेऽन्यानणुत्वधर्मेण, न चातिशय्यन्ते स्वयमस्मिन् धर्मे केनाप्यन्येन, ततस्तु व्यपदिश्यन्ते ते परमाणुसंज्ञया ।

## किं नाम परमाणुसद्भावे प्रमाणम् ?

अत्रेदमाशङ्क्यते—ननु किं नामात्र प्रमाणं यत् परमाणवोऽपि भवन्ति केचित् पदार्थाः । अणुत्वं नाम महत्त्वप्रतियोगी परिमाणविशेषः । सन्ति लोके तथाभूताः पदार्था ये न भवन्ति प्रत्यक्षाः, महत्त्वाभावात् । अणवस्तु ते व्यपदिश्यन्ते, अणुपरिमाणवत्त्वात् । तथा च सन्तु नाम अणवः पदार्थाः, अणुष्वपि भवन्ति केऽपि परमाणव इत्यत्र नास्ति प्रमाणम् । अणूनपि यावन्न स्पृशति प्रत्यक्षं नतरां पुनः परमाणून् । न चापि सम्भवत्यनुमानम्, लिङ्गाभावात् । नाप्युपमानम्, सादृश्याभावात् । नाप्यागमः, तत्र परमाणुचर्चाया अपि अनुपलब्धेः ।

तत्रोत्तरं दीयते—अनुमानं तावदत्र प्रमाणं यत् सन्ति परमाणवः केऽपि पदार्थाः। तथाहि—अणुपरिमाणतारतम्यं क्वचिद् विश्रान्तं परिमाणतारतम्यत्वात्, महत्परिमाणतारतम्यवदिति। अर्थाद् यथा ह्याकाशादयो महत्त्वोत्कर्षस्य परमसीमानः, तथैवाणुत्वोत्कर्षस्यापि क्वचिद् विश्रान्तिर्भवितुमर्हति। यत्र च तथात्वम्, त एव परमाणवो नाम।

न चास्तु विश्रान्तिरहित एवाणुत्वोत्कर्षः, विपक्षे बाधकाभावादिति वाच्यम्, तथात्वे सर्वेषामपि पदार्थानां समानपरिमाणत्वापत्तेरेव बाधकत्वात्। तथाहि—अवयवसंख्याभेदो वा, अवयवानां प्रचयविशेषो वा पदार्थानां लघुत्वमहत्त्वतारतम्यनियामकः। यथा अवयवसंख्यापरम्पराया अल्पत्वेन सर्षपस्य लघुत्वम्, आधिक्येन च महत्त्वं सुमेरोः। यदि हि सुमेरुसर्षपयोरवयवपरम्परा अविश्रान्ततया निर्विशेषं प्रसारमश्नुयात्, तर्हि द्वयोरप्यसंख्येयावयवत्वेन समानपरिमाणतापद्येत। न हि सुमेरुसर्षपयोरवयवसंख्यासाम्येऽपि प्रचयविशेषात् परिमाणभेदो वक्तुं सुशकः, तूलपिण्डवत्। तथा सति सुमेरोरवयवसंघटनायाः शिथिलत्वावश्यकतया सर्षपापेक्षया मृदुतरत्वापत्तेः, प्रशिथिलावयवतूलपिण्डवदेव। तथा च द्वयोः परिमाणभेदोपपादनाय तयोरवयवसंख्याभेद एवाश्रयणीयः। स चायं संख्याभेदोऽपेक्षतेऽवयवानामणुत्वोत्कर्षविश्रान्तिम्। तथात्वे हि सर्षपावयवविश्लेषपरम्परा विश्राम्यति शीघ्रतरं सुमेरोस्तु सुचिरतरेणेति तयोरवयवसंख्यानैन्यूनाधिक्यमादाय प्रवर्तते तत्र परिमाणभेदः। तदित्थं सर्वेषामेव पदार्थानां परिमाणभेदोपपादनाय तेषामवयवधाराया वक्तव्या क्वचिद् विश्रान्तिः। यत्र पुनर्विश्राम्यति सैषावयवपरम्परा, तत्रैव तु विश्रान्तिमर्हत्यणुत्वोऽत्कर्षोऽपि। तथा च त एव निरवयवा अन्तिमा अन्तिमा अवयवा लभन्ते परमाणुनामधेयाभिधेयताभागधेयम्।

## किं नाम अणुत्वे महत्त्वे च प्रमाणम्?

ननु विरम्यतां तावदत्रैव परमाणुचर्चा यावन्नाद्यापि सिध्यति केनापि प्रमाणेन अणुत्वमेव कोऽपि पदार्थः। प्रथमतोऽणुत्वसिद्धावेव पुरःसर्तुमर्हति परमाणुचर्चा। तथा च "मूले नष्टे कुतः शाखा" इति न्यायेनाणुत्वसिद्धेः पूर्वं कृतमनया परमाणुचर्चया काकदन्तपरीक्षया।

ननु कथमुच्यतेऽणुत्वस्यासिद्धत्वम्, यावत् परिमाणविशेषतया तत्सत्ता भवतिं सर्वप्रसिद्धेति चेन्न, परिमाणत्वसामान्यस्यैव तावदसिद्धेस्तद् विशेषस्य दूरापास्तत्वात्।

तथाहि—

परिमाणं नाम मानव्यवहारासाधारणकारणमुच्यते। तत्रेदमाशङ्क्यते—कः पुनरयं मानव्यवहारो नाम ? हस्तवितस्त्यादिव्यवहारो वा, अणुमहदादिव्यवहारो वा, असर्वगत-व्यवहारो वा, परिमितव्यवहारो वा ?

न तावद्धस्तवितस्त्यादिव्यवहारः, अननुगतत्वेन सामान्यलक्षणत्वानुपपत्तेः, परमाणौ परममहति चाभिमते तादृशव्यवहाराभावात्। नाप्यणुमहदादिव्यवहारः, सर्वपरिमाण-साधारणत्वाभावात्। नासर्वगतव्यवहारः, अविभुत्वेनैवोपपत्तेः, व्यापकपरिमाणे चाभावात्। नापि परिमितव्यवहारः, महद्व्यवहारस्यैव परिमितव्यवहारत्वेन सर्वपरिमाणाव्यापकत्वात्। न चाणुत्वेऽपि परिमितव्यवहारोऽस्तीति वाच्यम्, परिमाणत्वजातेरसिद्धौ अणुत्व-स्याप्यसिद्धत्वात्।

न चाणुपरिमाणतारतम्यं क्वचिद् विश्रान्तम्, परिमाणतारतम्यत्वाद् महत्परिमाण-तारतम्यवदित्यनुमानेन भवेत् तत्सिद्धिरिति वाच्यम्, विकल्पासहत्वात्।

तथाहि—परिमाणतारतम्यं किम्, अणुमहत्परिमाणसाधारणपरिमाणजातीयतारतम्यं विवक्षितं, महत्त्वतारतम्यं वा ? न तावदाद्यः, असिद्धेः। नापि द्वितीयः, सिद्धसाधनत्वात्, अपकृष्टमहत्त्वतारतम्यस्यैवाणुपरिमाणतारतम्यात्मकत्वात्, तस्य च त्रसरेणावेव विश्रान्तत्वात्।

न च त्र्यणुकोपादानं परिमाणवत्, द्रव्यत्वात्; घटवदिति तत्सिद्धिः स्यादिति वाच्यम्, परिमाणजातीयतामात्रस्य व्यापकस्यासिद्धौ प्रतिबन्धासिद्धेः। व्यापकतावच्छेद-रूपग्रहं विना व्यापकत्वाग्रहे तन्निरूपितव्याप्तिग्रहासंभवात्। यत्र द्रव्यत्वम्, तत्र परिमाण-मिति व्याप्तिः, तदा गृह्येत यदि व्यापकतावच्छेदकं परिमाणत्वं सिद्धं भवेत्, तस्यैव त्वद्याप्यसिद्धेः।

न च त्र्यणुकोपादानं परिमाणवदिति साध्यस्यायमर्थो यत् परिमितव्यवहारहेतु-गुणवदस्तीति वाच्यम्, गुरुत्वावच्छेदकादावपि परिमितव्यवहारदर्शनेनार्थान्तरतापत्तेः।

तथा चाणुत्वसाधकप्रमाणाभावेन तदभावेऽलमनया परमाणुचिन्तयेति चेत्, अत्रोच्यते—त्र्यणुकोपादानं गुणत्वापरजात्या महत्त्वैकजातीयगुणवत्, द्रव्यत्वात्, घटव-दित्यनुमानेन परिमाणत्वसामान्यजातिसिद्धेः।

न चात्र न महत्त्वैकजात्या एकजातीयगुणवत्त्वं साध्यतामर्हति, तथात्वेऽप्रसिद्धान्तापत्तेः, त्र्यणुकापादाने महत्त्वानभ्युपगमात्। नापि जात्यन्तरेण, जात्यन्तरत्वेन परिमाणत्वस्यैव वक्तव्यत्वात्, तस्य चासिद्धेरिति वाच्यम्; नानामहत्त्वसाधारणजातिमात्रेण तथा साध्यत्वात्।

न चैवं तत्र महत्त्वस्यैव सिद्धिः स्यादिति वाच्यम्, तथा सति परमाणोरपि दृश्यतापत्तेः।

तथा च महत्त्वाणुत्वसाधारणी जातिः परिमाणत्वं नाम सिध्यति। तस्यैव च परिमितव्यवहारकारणतावच्छेदकत्वेऽपि यत् पुनर्गुरुत्वावच्छेदकादौ परिमितव्यवहारदर्शनं तत् खलु गुरुत्वावच्छेदकोपाधीभूतसंख्यामादायेति नार्थान्तरम्।

न चैवं घटादिपरिमाणेऽप्यवच्छेदकहस्तादिसंख्यानिबन्धन एव परिमितव्यवहारः स्यादिति वाच्यम्, हस्ताद्यवच्छेदं विनापि परिमितव्यवहारात्। गुरुत्वे तूपाधिं विना तथा व्यवहाराभावात्।

अपि च गुरुत्वं न परिमाणसजातीयो गुणः, तथा सति गुरुत्वोत्कर्षापकर्षाभ्यां सह परिमाणस्याप्युत्कर्षापकर्षापत्तेः। तथा च गुरुत्वे परिमितव्यवहार उपाधिनिबन्धन एव।

ननूपरिष्टाद् महत्त्वोपष्टम्भेन तावत् परिमाणत्वसामान्यजातिरुपपादिता। न च विद्यते स्वयं महत्त्व एव किमपि प्रमाणमिति साध्याप्रसिद्धिः ?

न च महदिति प्रत्यय एव महत्त्वसाधकः स्यादिति वाच्यम्, बहुतरद्रव्यसमवायेनैव तथा प्रत्ययोपपत्तेः। बहुतरद्रव्यसमवायाभावेनैव च द्व्यणुकादेरनुपलम्भस्याप्युपपत्तेः।

न चैवं गगनेऽपि महदिति प्रत्ययो न स्यादिति वाच्यम्, इष्टापत्तेः; अन्यत्र महत्त्वासिद्धौ तत्रापि महत्त्वाननुमानात्।

अत्रोच्यते—बहुत्वं हि यद् महत्त्वव्यवहारकारणं स्वीक्रियते, तत् किम् अवयवबहुत्वमात्रं तथा व्यवहारहेतुः, बहुत्वविशेषो वा ? न तावदवयवबहुत्वमात्रम्, महदल्पसाधारणत्वेनाल्पव्यवहारोच्छेदप्रसङ्गात्। नापि बहुत्वविशेषः, स हि निर्धारितो वा स्यात्, अनिर्धारितो वा ? न तावन्निर्धारितः, अवयवबहुत्वे सत्ताया अनिश्चयेऽपि घटादौ महदिति व्यवहारात्। नाप्यनिर्धारितः, महत्त्वप्रकर्षापकर्षप्रत्ययाभावप्रसङ्गात्।

न च प्रचुरदेशव्यापकत्वात् तदनुमानमिति वाच्यम्, देशप्राचुर्यस्यापि निश्चायकमानाभावात्। तत्रापि प्रचुरदेशव्यापकत्वानुमानेऽनवस्थापातात्।

न च कथं पुनर्घटादेः प्रचुराप्रचुरदेशव्यापकताप्रत्यय इति वाच्यम्, महत्त्वोत्कर्षापकर्षाभ्यामेव तदनुमानात्।

अपि च देशानां भेदेन प्रतिसन्धानाभावे तदपेक्षाबुद्ध्यधीनस्य बहुत्वविशेषस्यैवानुपपत्तेः कथं स महद् व्यवहारकारणं भवितुमर्हति ? तथा च महदिति प्रत्ययबलेन प्रत्यक्षसिद्धो महत्त्वं नाम परिमाणविशेषः।

तदित्थं प्रत्यक्षसिद्धं महत्त्वं सिसाधयिषान्यायेन अनुमानद्वारापि समश्नुते सिद्धिम्। तथाहि—द्व्यणुकानुपलम्भो गुणविशेषविपर्ययाधीनः, सालोकेन्द्रियसन्निकृष्टचाक्षुषद्रव्यानुपलम्भत्वात्, पवनानुपलम्भवदिति।

तदेवं प्रत्यक्षानुमानाभ्यां स्वयं सिद्धं महत्त्वं साधयत्यनुमानविधया परिमाणत्वं स्वव्यापकम्। परिमाणत्वेन च सिध्यति पुनर्महत्त्वाभावेऽणुत्वम् अणुव्यवहारनिबन्धनम्। भवति चात्र प्रशस्तभाष्यसंवादोऽनुकूलः। तथाहि—

"परिमाणं मानव्यवहारकारणम्। तच्चतुर्विधम्—अणु, महद्, दीर्घं, ह्रस्वं च। तत्र महद् द्विविधम्—नित्यमनित्यं च। नित्यमाकाशकालदिगात्मसु परममहत्त्वम्; अनित्यं त्र्यणुकादावेव।

तथा चाणवपि द्विविधम्—नित्यमनित्यं च। नित्यं परमाणुमनःसु, तत्तु परिमण्डलम्। अनित्यं द्व्यणुक एव। कुवलयामलकबिल्वादिमहत्स्वपि तत्प्रकर्षभावाभावमपेक्ष्य भाक्तोऽणुत्वव्यवहारः। दीर्घत्वह्रस्वत्वे चोत्पाद्य महदणुत्वैकार्थसमवेते। समिदिक्षुवंशादिष्वञ्जसा दीर्घेष्वपि तत्प्रकर्षभावाभावमपेक्ष्य भाक्तो ह्रस्वत्वव्यवहारः।

अनित्यं चतुर्विधमपि संख्यापरिमाणप्रचययोनि। तत्रेश्वरबुद्धिमपेक्ष्योत्पन्नपरमाणुद्व्यणुकेषु बहुत्वसंख्यातैरारब्धे कार्यद्रव्ये त्र्यणुकादिलक्षणे रूपाद्युत्पत्तिसमकालं महत्त्वं दीर्घत्वं च करोति। द्विबहुभिर्महद्भिश्चारब्धे कार्यद्रव्ये कारणमहत्त्वान्येव महत्त्वमारभन्ते, न बहुत्वम्; समानसंख्यैश्चारब्धेऽपि महत्त्वदर्शनात्।

प्रचयस्तूलपिण्डयोर्वर्तमानः पिण्डारम्भकावयवप्रशिथिलसंयोगानपेक्षमाणः, इतरेतरपिण्डावयवसंयोगापेक्षो वा द्वितूलके महत्त्वमारभते, न बहुत्वमहत्त्वानि, समानसंख्यापरिमाणैरारब्धेऽतिशयदर्शनात्।

द्वित्वसंख्या चाण्वोर्वर्तमाना द्व्यणुकेऽणुत्वमारभते। महत्त्ववत् त्र्यणुकादौ कारण-बहुत्वमहत्त्वसमानजातीयप्रचयेभ्यो दीर्घत्वस्योत्पत्तिः। अणुत्ववच्च द्व्यणुके ह्रस्वत्वस्यो-त्पत्तिः" इति।

## के नाम परमाणवः ?

तदित्थं सुसिध्यमानेऽणुत्वे सम्भवति तत्र परमाणुत्वमपीति लभतेऽवकाशं परमाणु-चर्चाप्रसङ्गः सुतराम्। तथा चोपतिष्ठते प्रश्नः—के नाम तेऽवयवविशेषा ये भवन्ति परमाणुपदाभिधेयतासौभाग्यभाज इति।

द्विविधं तावदत्र मन्तव्यं मनीषिणाम्। तथाहि केचिदाहुस्त्रसरेणवो नाम परमाणवः। तथा चोक्तम्—

जालसूर्यमरीचिस्थं यत् सूक्ष्मं दृश्यते रजः।
प्रथमं तत् प्रमाणानां त्रसरेणुरिति स्मृतः॥ इति।

अथापरे प्रतिपादयन्ति—न त्रसरेणवः परमाणवः, अपि तु त्रसरेणूनामप्यवयवाना-मवयवाः परमाणुपदवाच्यतामर्हन्ति। तथाहि त्रसरेणवस्तावद् दृश्यमानद्रव्याणि। दृश्यमान-त्वाच्च भवितुमर्हन्ति महत्त्वपरिमाणवन्तः। महत्त्वाच्च भवितव्यं तैः सावयवैर्घटपटादिवत्। ये चैते त्रसरेणूनामवयवाः, ते द्व्यणुका नाम। भवितव्यं पुनरेतैर्द्व्यणुकैरपि सावयवैर्महदा-रम्भकत्वात्, तन्तुकपालादिवत्। न चातः परं पुनरस्ति द्व्यणुकावयवानां सावयवत्वे प्रमाणं किमपि, प्रभवति चानवस्थादोषो निष्प्रमाणं तथा स्वीकारे। तथा च यदेते द्व्यणु-कावयवास्तेष्वेव समाप्यतेऽवयवविभागपरम्परा, पर्यवस्यति च तत्रैवाणुत्वोत्कर्ष इति विराजन्ते त एव परमाणुपदासने।

तदित्थं त्रसरेणूनामवयवा द्व्यणुकाः, द्व्यणुकानामवयवाश्च परमाणवः। द्वाभ्यां द्वाभ्यां हि परमाणुभ्यां समुत्पद्यन्ते द्व्यणुकाः, त्रिभ्यस्त्रिभ्यश्च द्व्यणुकेभ्यः समारभ्यन्ते त्रसरेणवः। अत एव च त्र्यणुक इति त्रसरेणूनां नामान्तरम्। तथा च त्रसरेणूनां षष्ठो भागो भवति परमाणुः। तथा चोक्तम्—

जालान्तरगते भानौ यत् सूक्ष्मं दृश्यते रजः।
तस्य षष्ठतमो भागः परमाणुरिति स्मृतः॥ इति।

अथैतदसहमानास्त्रसरेणुपरमाणुत्ववादिनः प्रत्यवतिष्ठन्ते। तथाहि—त्रसरेणूनां द्व्यणुकानां च सावयवत्वसाधकमुपर्युक्तमनुमानद्वयमप्यप्रमाणम्, विपक्षे बाधकाभावात्।

न च चाक्षुषं प्रत्यक्षं प्रति महत्त्वं भवति कारणमिति प्रत्यक्षाणां त्रसरेणूनां महत्त्वमावश्यकम्। तच्चावयवसंख्याजन्यमेव भवितुमर्हति, तेन भवितव्यं तदवयवैरिति विद्यतेऽत्रानुकूलस्तर्क इति वाच्यम्, त्रसरेणुमहत्त्वस्य नित्यत्वस्वीकारेणैवोक्ततर्कानवतारात्।

न चैवमणुव्यवहारानुपपत्तिरिति वाच्यम्, तस्यापकृष्टपरिमाणनिबन्धनमात्रत्वात्, महत्यपि महत्तरापेक्षयाऽणुव्यवहारदर्शनात्। तथा च त्रसरेणूनामवयवे प्रमाणाभावात् त एव परमाणव इति।

अत्रेदं विचारणीयम्—कथं नाम त्रसरेणावेकत्र सम्भवति परमाणुत्वस्य च प्रत्यक्षत्वस्य परस्परविरुद्धस्य सन्निवेशः ? अणुत्वं हि प्रत्यक्षताविरोधितया सम्प्रतिपन्नम्। प्रतिपद्यते हि सूक्ष्मत्वेन वस्तूनामप्रत्यक्षता। उच्यते च "अतिदूरात्, सामीप्यात्, इन्द्रियघातात्, मनोऽनवस्थानात्, सौक्ष्म्यात्, व्यवधानात्, अभिभवात्, समानाभिहाराच्च" इति। अदृश्यताहेतूनां मध्ये सूक्ष्मत्वमप्यन्यतमो हेतुः। प्रतिपाद्यते च "सौक्ष्म्यात्तदनुपलब्धिः, नाभावात् कार्यतस्तदुपलब्धेः" इति प्रकृत्यादितत्त्वानां प्रत्यक्षाभावे सूक्ष्मत्वमेव हेतुतया। सूक्ष्मत्वं चाणुत्वं चानर्थान्तरम्। तथा च कथं भवेत् परमाणुरूपाणां त्रसरेणूनां प्रत्यक्षता ! न चाप्रत्यक्षास्त्रसरेणवः, प्रत्यक्षत्वेनैव तेषां वर्णनात्। अपि च त्रसरेणूनामेव त्र्यणुकमिति नामान्तरं सिध्यति चानेन तेषामणुत्रयनिर्मितत्वम्। तथात्वेऽपि कथमेषां स्यात् परमाणुता !

अथवा त्र्यणुकतो भिन्ना एव त्रसरेणुरिति रूढनामधेयाः केऽपि निकृष्टमहत्तमाः पदार्थाः। त एव परमाणवः। तेषामेव च नित्यं महत्त्वम्। महत्त्वेन प्रत्यक्षयोग्यत्वेऽपि दुष्प्रत्यक्षत्वात् तत्राप्रत्यक्षत्वव्यवहारः। अत एव मुनीनां सम्भवति तेषामपि प्रत्यक्षम्।

भवतु यथा तथा, नास्त्यत्र केषामपि विप्रतिपत्तिर्यद् द्रव्याणां सूक्ष्मतमा अवयवाः परमाणवो नाम।

## कानि नाम द्रव्याणि परमाणुरूपाणि ?

अथ कानि नाम द्रव्याणि परमाणुरूपाणीति चेत्, अत्रोच्यते—"पृथिव्यापस्तेजो वायुराकाशं कालो दिगात्मा मन इति द्रव्याणि" इति वैशेषिकसूत्रानुसारं नव तावत् पदार्था द्रव्यात्मना जगतां घटकतया स्थिताः। तत्र आकाशम्, कालः, दिक्, आत्मा चेति चतुर्णां परममहत्त्वेन परमाणुरूपताकथापि न सङ्गच्छते। शेषाणां पुनः पञ्चानां मध्ये "युगपज्ज्ञानानुपलब्धिर्मनसो लिङ्गम्" इति सूत्रानुसारमनुमानसिद्धस्य मनसो माध्यमिकपरिमाणवत्त्वे पुनरपि ज्ञानयौगपद्यप्रसङ्गात् "यावता विनाऽनुपपत्तिस्तावत् सर्वं कल्पनीयम्" इति न्यायेन मनसोऽणुत्वं सम्प्रतिपन्नमिति मनस्तावदेकं परमाणुरूपम्।

तथा चोच्यते—

साक्षात्कारे सुखादीनां कारणं मन उच्यते।
अयौगपद्याज्ज्ञानानां तस्याणुत्वमिहेष्यते ॥ इति।

अथ च सूक्ष्मात् स्थूलमिति सृष्टिनियमाद् भौतिकपदार्थानामारम्भकतया स्थितानां पृथिव्यप्तेजोवायूनां सूक्ष्मस्थूलोभयात्मकत्वावश्यकतया तेषां चतुर्णामपि सिध्यति परमाणुरूपत्वम्।

तथा च पृथिवी, जलम्, तेजः, वायुः, मनश्चेति भवन्ति पञ्च परमाणुरूपाणि द्रव्याणि। तथा चोक्तम्—

"तत्र गन्धवती पृथिवी। सा द्विविधा–नित्या चानित्या च। नित्या परमाणुरूपा, अनित्या कार्यरूपा।"

"शीतस्पर्शवत्य आपः। ता द्विविधाः–नित्या अनित्याश्च। नित्याः परमाणुरूपाः, अनित्याः कार्यरूपाः।"

"उष्णस्पर्शवत् तेजः। तद् द्विविधम्-नित्यमनित्यं च। नित्यं परमाणुरूपम्, अनित्यं कार्यरूपम्।"

"रूपरहितः स्पर्शवान् वायुः। स द्विविधः—नित्योऽनित्यश्च। नित्यः परमाणुरूपः, अनित्यः कार्यरूपः।"

"सुखाद्युपलब्धिसाधनमिन्द्रियं मनः। तच्च प्रत्यात्मनियतत्वादनन्तं परमाणुरूपं नित्यं च।" इति।

तदित्थं पृथिव्यप्तेजोवायुमनसां परमाणुरूपत्वं सर्वेषां सम्प्रतिपन्नम्।

अथ च "तस्माद् वा एतस्मादात्मनः आकाशः सम्भूतः" इत्यौपनिषदाः, "तन्मात्राण्यविशेषास्तेभ्यो भूतानि पञ्च पञ्चभ्यः" इति सांख्याश्चाकाशस्यापि पृथिव्यादिवदेव जन्यतां सूक्ष्मस्थूलभेदं च निरूपयन्तस्तस्यापि परमाणुरूपतां व्याचक्षते। यदि चेत्थं महाकाशस्यापि जन्यद्रव्येषु क्रियेत परिगणना, तर्हि पृथिव्यप्तेजोवाय्वाकाशानि पञ्च भूतानि मनश्चेति षड् द्रव्याणि सम्भवन्ति। परमाणुरूपाणि महाकाशस्यापि पृथिव्यादिवत् सूक्ष्मतः स्थूलोत्पत्तिनियमेनैव निष्पत्तेरावश्यकत्वात्।

## परमाणवो नित्याः, किं वा अनित्याः ?

अथैतानि परमाणुरूपाणि द्रव्याणि किं नित्यानि, किं वा अनित्यानीति विचारणायां ये खलु परमाणुवादिनो वैशेषिका नैयायिकाश्च तेषां मतेन नित्यास्तावत् परमाणवः।

तथाहि—नित्यत्वं नाम प्रागभावाप्रतियोगित्वे सति ध्वंसाप्रतियोगित्वम्। तद्वैपरीत्येन चानित्यत्वं नाम प्रागभावप्रतियोगित्वे सति ध्वंसप्रतियोगित्वम्, उत्पत्तिविनाशशीलत्वमिति यावत्।

तत्रोत्पत्तिर्यथा कस्यापि द्रव्यस्य स्वसमवायिकारणेभ्यस्तेषां संयोगद्वारा सम्भवति, तथैव विनाशोऽपि खलु तस्य द्रव्यस्य समवायिकारणनाशाद् वा असमवायिकारण( स्वावयवसंयोग )नाशाद् वा सम्भवति। यथा हि तन्तुनाशात् तन्तुसंयोगनाशाद् वा भवति पटस्य विनाशः।

सम्भवति चेयं प्रक्रिया सावयवेष्वेव द्रव्येषु, न पुनर्निरवयवेषु। निरवयवाश्च परमाणव इति सुनिरूपितमुपरिष्टात्। नास्ति तत्र समवायिकारणनाशस्य, असमवायिकारणनाशस्य वा प्रसङ्गः। न चास्त्यन्यः प्रकारो विनाशस्येति सिध्यतितरां परमाणूनां नित्यत्वम्। भवति चात्र "सदकारणवद् नित्यम्" इति वैशेषिकसूत्रमनुकूलम्।

अथ ये पुनः सांख्या वेदान्तिनश्च प्रकारान्तरेणैव विकासं पञ्चभूतानामामनन्ति प्रतिपादयन्ति च "नासतो विद्यते भावो नाभावो विद्यते सतः" इति सिद्धान्तम्, तन्मतेनाविर्भावतिरोभावयोरेवोत्पत्तिविनाशार्थत्वेन पञ्चानामपि भूतानां स्वस्वकारणादाविर्भावतिरोभावस्वीकारात् तेषां परमाणूनामनित्यत्वमेव प्रतिभाति, तथापि सत्कार्यवादे आविर्भावात् पूर्वमपि पश्चादपि च तिरोभावात् सूक्ष्मातिसूक्ष्मरूपेण कार्यस्य सत्त्वावश्यकतया भूतानामाविर्भावात् पूर्वमपि सूक्ष्मरूपेण विद्यमानत्वाद् वस्तुगत्या नित्यत्वमेव प्रभवति।

## परमाणव एकैकमात्रगुणाः, किं वा अनेकगुणाः ?

अथ पृथिव्यादिपरमाणूनामेकैकं गुणवत्त्वमाहोस्विदनेकगुणवत्त्वमिति विचारचर्चायामाहुर्वैशेषिका नैयायिकाश्च—परमाणूनां यथोपलम्भमनेकगुणवत्त्वम्। तथाहि—वायुपरमाणवस्तावत् स्पर्शैकमात्रगुणाः, तेजःपरमाणवो रूपस्पर्शात्मकगुणद्वयवन्तः, जलपरमाणवो रूपरसस्पर्शगुणत्रयवन्तः, पृथिवीपरमाणवश्च रूपरसगन्धस्पर्शगुणचतुष्टयवन्त इति। गुणपदेनात्र विशेषगुणानामेव विवक्षा। तथा च परमाणुषु संख्यापरिमाणादयोऽन्येऽपि सामान्यगुणा भवन्तीत्यन्यदेतत्। तदस्मिन् विषये भवन्ति वैशेषिकसूत्राण्यनुकूलानि। तथाहि—

"रूपरसगन्धस्पर्शवती पृथ्वी। रूपरसस्पर्शवत्य आपो द्रवाः स्निग्धाः। तेजो रूपस्पर्शवत्। स्पर्शवान् वायुः" इति। तथा च न्यायसूत्राणि—

"गन्धरसरूपस्पर्शशब्दानां स्पर्शपर्यन्ताः पृथिव्याः, अप्तेजोवायूनां पूर्वं पूर्वमपोह्य आकाशस्योत्तरः।" इति।

अथास्मिन् विषये सांख्याः प्रतिपद्यन्ते—शब्दैकमात्रमाकाशम्। शब्दस्पर्शगुणद्वयवान् वायुः। शब्दस्पर्शरूपगुणत्रयवत् तेजः। शब्दस्पर्शरूपरसगुणचतुष्टयवत्य आपः। शब्दस्पर्शरूपरसगन्धगुणपञ्चकवती च पृथिवी। तथाहि प्रतिपादयन्ति "तन्मात्राण्यविशेषास्तेभ्यो भूतानि पञ्च पञ्चभ्यः" इति कारिकाव्याख्यायां तत्त्वकौमुद्यां श्रीवाचस्पतिमिश्राः—

"तत्र शब्दतन्मात्रादाकाशं शब्दगुणम्। शब्दतन्मात्रसहितात् स्पर्शतन्मात्राद् वायुः शब्दस्पर्शगुणः। शब्दस्पर्शतन्मात्रसहिताद् रूपतन्मात्रात् तेजः शब्दस्पर्शरूपगुणम्। शब्दस्पर्शरूपतन्मात्रसहिताद् रसतन्मात्रात् शब्दस्पर्शरूपरसगुणा आपः। शब्दस्पर्शरूपरसतन्मात्रसहिताद् गन्धतन्मात्रात् शब्दस्पर्शरूपरसगन्धगुणा पृथिवी।" इति।

अथ च तदनुरूपामेव गुणव्यवस्थां निरूपयन्ति वेदान्तिनोऽपि। तथाहि तेषां सृष्टिविकासप्रक्रिया—

तमःप्रधानप्रकृते – स्तद्भोगायेश्वराज्ञया।
वियत्पवनतेजोऽम्बुभुवो भूतानि जज्ञिरे॥ इति।

तथा—

तद्भोगाय पुनर्भोग्यभोगायतनजन्मने।
पञ्चीकरोति भगवान् प्रत्येकं वियदादिकम्॥
द्विधा विधाय चैकैकं चतुर्धा प्रथमं पुनः।
स्वस्वेतरद्वितीयांशैर्योजनात् पञ्च पञ्च ते॥
तैरण्डस्तत्र भुवनं भोग्यभोगाश्रयोद्भवः॥

इति च।

तत्र च गुणव्यवस्था—

शब्दस्पर्शौ रूपरसौ गन्धो भूतगुणा अमी।
एकद्वित्रिचतुष्पञ्च गुणा व्योमादिषु क्रमात्॥ इति।

तथा—

प्रतिध्वनिर्वियच्छब्दो वायौ वीसीति शब्दनम् ।
अनुष्णाशीतसंस्पर्शो वह्नौ भुगुभुगुध्वनिः ॥
उष्णः स्पर्शः प्रभारूपं जले बुलबुलुध्वनिः ।
शीतः स्पर्शः शुक्लरूपं रसो माधुर्यमीरितम् ॥
भूमौ कडकडाशब्दः काठिन्ये स्पर्श इष्यते ।
नीलादिकं चित्ररूपं मधुराम्लादिको रसः ॥
सुरभीतरगन्धौ द्वौ गुणाः सम्यग् विवेचिताः ॥ इति च ।

तदस्यां पञ्चीकरणप्रक्रियायां सर्वेष्वपि भूतेषु भूतान्तरांशानामपि संमिश्रणात् सर्वैरपि गुणैर्भवितव्यं यद्यपि, तथापि "वैशेष्यात्तु तद्वादस्तद्वादः" इति न्यायेन भवत्युपर्युक्तसंख्यया गुणव्यवस्थासङ्गतिः ।

तथा चोपर्युक्तसांख्यवेदान्तप्रक्रियानुसारं तत्तद्भूतानां परमाणुभिरपि तत्तत्संख्यैव गुणवद्भिर्भवितव्यमिति केऽपि परमाणव एकमात्रगुणाः, केऽपि पुनरनेकगुणा इत्येकं मतम् ।

अथाधुनिकाः केऽपि दार्शनिकाः सांख्याभिमततन्मात्राणां वैशेषिकाभिमतपरमाणूनां चाभेदं समर्थयन्तः प्रतिपादयन्ति परमाणूनामेकैकमात्रगुणवत्त्वम् । तथाहि—गन्धमात्रगुणाः पृथिवीपरमाणवः, रसमात्रगुणा जलपरमाणवः, रूपमात्रगुणास्तेजःपरमाणवः, स्पर्शमात्रगुणा वायुपरमाणवः, शब्दमात्रगुणाश्चाकाशपरमाणव इति । प्रमाणयन्ति चात्र प्राचीनवचनानि । यथा—

वायोः स्पर्शो रसोऽद्भ्यश्च ज्योतिषो रूपमुच्यते ।
आकाशप्रभवः शब्दो गन्धो भूमिगुणः स्मृतः ॥

इति महाभारते शान्तिपर्वणि मोक्षधर्मवचः । तथा—

आकाशं जायते तस्मात् तस्य शब्दं गुणं विदुः ।
बलवान् जायते वायुस्तस्य स्पर्शो गुणो मतः ॥
ज्योतिरुत्पद्यते तस्मात् तद् रूपगुणमुच्यते ।

इत्यादिमनुवचनानि च ।

अथ कथं पुनर्भूतवर्णनप्रस्तावेषु तत्र तत्र पृथिव्यादिष्वितरगुणवर्णनं सङ्गच्छत इति प्रश्नस्य च कुर्वन्ति समाधानं ते यद् न खलु तद् भूतगुणवर्णनम्, अपि तु भौतिकपदार्थानां गुणवर्णनम्। भौतिका हि पदार्था भवन्त्यनेकभूतांशसंमिश्रणजन्या इति तेषु भूतान्तरसंसर्गात् सम्भवति गुणान्तरवत्त्वमपीति। न च ते स्वीकुर्वन्ति दृश्यमानस्थूलपदार्थानां भूतत्वमपि। बहिरिन्द्रियग्राह्यविशेषगुणवत्त्वं नाम भूतत्वमिति प्राचीनानां भूतलक्षणस्य सत्यपि तत्र समन्वये भौतिकपदार्थानां भूतत्वममन्यमानास्ते तादृशलक्षणस्य भौतिकेष्वतिव्याप्तिमाकलयन्तस्तदनादृत्य अन्यादृशमेव निरूपयन्ति भूतलक्षणम्। यथा—"नित्यत्वे सति गुणवत्समवायिकारणत्वं भूतत्वम्" इति। तथा च तन्मतेन परमाणुरूपा एव पृथिव्यादयो भूतानि न पुनर्द्व्यणुकादयः, भौतिकास्तु ते भूतान्तरयोगजन्यत्वात्।

सेयं विचारसरणिः सहते न वा दार्शनिकपरीक्षामिति नात्र विचारावकाशः। तथापि परमाणूनामेकैकमात्रगुणवत्त्वपक्षो न केवलमाधुनिकः, अपि तु प्राचीन इति प्रतीयते न्यायभाष्यसन्दर्भादिति प्रासङ्गिकत्वात् समुद्ध्रियतेऽत्र सप्रसङ्गः, येन सप्रमाणं विशदीभवेयुरत्र पूर्वोत्तरपक्षाः। तथाहि न्यायभाष्यम्—गन्धादयः पृथिव्यादिगुणा इत्युद्दिष्टम्। उद्देशश्च भूतानामेकगुणत्वे चानेकगुणत्वे समानमित्यत आह—

न्यायसूत्रम्—"गन्धरसरूपस्पर्शशब्दानां स्पर्शपर्यन्ताः पृथिव्याः, अप्तेजोवायूनां पूर्वपूर्वमपोह्य आकाशस्योत्तरः।" ( ३-१-६२,६३ )।

तदित्थं सूत्रद्वयेन गुणविभागं भूतानां कृत्वा पूर्वपक्षं दर्शयति सूत्रकारः। तथाहि सूत्रम्—"न सर्वगुणानुपलब्धेः" ( ६-१-६४ ) इति।

भाष्यम्—नायं गुणनियोगः साधुः, कस्मात्? यस्य भूतस्य ये गुणाः, न ते तदात्मकेनेन्द्रियेण सर्व उपलभ्यन्ते। पार्थिवेन हि घ्राणेन स्पर्शपर्यन्ता न गृह्यन्ते, गन्ध एवैको गृह्यते। एवं शेषेष्वपीति।

प्र०—कथं पुनरिमे गुणा नियोक्तव्याः?

उ०—सूत्रम्—"एकैकश्येनोत्तरगुणसद्भावादुत्तरोत्तराणां तदनुपलब्धिः" ( ३-१-६५ )।

भाष्यम्—गन्धादीनामेकैको यथाक्रमं पृथिव्यादीनामेकैकस्य गुणः, अतस्तदनुपलब्धिः = तेषां तयोः तस्य चानुपलब्धिः। घ्राणेन रूपरसस्पर्शानाम्, रसनेन रूपस्पर्शयोः, चक्षुषा च स्पर्शस्येति।

प्र०—कथं तर्हि अनेकगुणानि भूतानि गृह्यन्त इति ।

उ० —सूत्रम्—"संसर्गाच्चानेकगुणग्रहणम् ।"

भाष्यम्—जलादिसंसर्गाच्च पृथिव्यां रसादयो गृह्यन्ते । एवं शेषेष्वपीति ।

प्र०—नियमस्तर्हि न प्राप्नोति, संसर्गस्यानियमात्, चतुर्गुणा पृथिवी, त्रिगुणा आपः, द्विगुणं तेजः, एकगुणो वायुरिति ।

उ०—नियमश्चोपपद्यते ।

प्र०—कथम् ?

उ०—सूत्रम्—"विष्टं ह्यपरं परेण ।"

भाष्यम्—पृथिव्यादीनां पूर्वपूर्वमुत्तरोत्तरेण विष्टम्, अतः संसर्गनियमः । तच्चैतद् भूतसृष्टौ वेदितव्यं नैतर्हीति ।

तदित्थं पूर्वपक्षमुपपाद्य तन्निरासाय प्रवर्तते सिद्धान्तपक्षः । तथाहि—

सूत्रम्—"न, पार्थिवाप्ययोः प्रत्यक्षत्वात् ।"

भाष्यम्—नेति त्रिसूत्रीं प्रत्याचष्टे । कस्मात् ? पार्थिवस्य द्रव्यस्य आप्यस्य च प्रत्यक्षत्वात् । महत्त्वात्, अनेकद्रव्यवत्त्वाद् रूपाच्चोपलब्धिरिति तैजसमेव द्रव्यं प्रत्यक्षं स्यात्, न पार्थिवमाप्यं वा, रूपाभावात् । तैजसवत्तु पार्थिवाप्ययोः प्रत्यक्षत्वाद् न संसर्गादनेकगुणग्रहणं भूतानामिति । भूतान्तरकृतं च पार्थिवाप्ययोः प्रत्यक्षं ब्रुवतः प्रत्यक्षो वायुः प्रसज्यते । नियमे वा कारणमुच्यतामिति ।

(२) रसयोर्वा पार्थिवाप्ययोः प्रत्यक्षत्वात्, पार्थिवो रसः षड्विधः, आप्यो मधुर एव । न चैतत् संसर्गाद् भवितुमर्हति ।

(३) रूपयोर्वा पार्थिवाप्ययोः प्रत्यक्षत्वात् तैजसरूपानुगृहीतयोः, संसर्गे हि व्यञ्जकमेव रूपं न व्यङ्ग्यमिति । एकानेकविधत्वे च पार्थिवाप्ययोः प्रत्यक्षत्वाद् रूपयोः । पार्थिवं हरितलोहितपीताद्यनेकविधं रूपम्, आप्यन्तु शुक्लमप्रकाशकम् । न चैतदेकगुणानां संसर्गे सत्युपपद्यत इति । उदाहरणमात्रं चैतत् । अतः परं प्रपञ्चः—

(४) स्पर्शयोर्वा पार्थिवतैजसयोः प्रत्यक्षत्वात् । पार्थिवोऽनुष्णाशीतः स्पर्शः, उष्णश्च तैजसः प्रत्यक्षः । न चैतदेकगुणानामनुष्णाशीतस्पर्शेन वायुना संसर्गेणोपपद्यत इति ।

(५) अथवा पार्थिवाप्ययोर्द्रव्ययोर्व्यवस्थितगुणयोः प्रत्यक्षत्वात् । चतुर्गुणं पार्थिवम्, त्रिगुणमाप्यमप्रत्यक्षम्, तेन तत्कारणमनुमीयते तथाविधमिति । तस्य कार्यं लिङ्गम्, कारणभावाद्धि कार्यभावः ।

(६) एवं तैजसवायव्ययोर्द्रव्ययोः प्रत्यक्षत्वाद् गुणव्यवस्थायास्तत्कारणे द्रव्ये व्यवस्थानुमानम् ।

(७) दृष्टश्च विवेकः पार्थिवाप्ययोः प्रत्यक्षत्वात् । पार्थिवं द्रव्यमबादिभिर्वियुक्तं प्रत्यक्षतो गृह्यते, आप्यं च पराभ्याम्, तैजसं च वायुना । न चैकैकगुणं गृह्यते ।

(८) निरनुमानं तु विष्टं ह्यपरं परेणेति । नात्र लिङ्गमनुमापकं गृह्यते, येनैतदेवं प्रतिपद्येमहि ।

(९) यच्चोक्तम्—विष्टं ह्यपरं परेणेति भूतसृष्टौ वेदितव्यं न साम्प्रतमिति, नियमकारणाभावात् , तदयुक्तम् । दृष्टं च साम्प्रतमपि अपरं परेण विष्टम्, वायुना च विष्टं तेज इति । विष्टत्वं संयोगः, स च द्वयोः समानः, वायुना च विष्टत्वात् स्पर्शवत् तेजः, न तु तेजसा विष्टत्वाद् रूपवान् वायुरिति नियमे कारणं नास्ति ।

(१०) दृष्टं च तैजसेन स्पर्शेन वायवीयस्य स्पर्शस्याभिभवादग्रहणम् । न च तेनैव तस्याभिभव इति ।

तदित्त्थं न्यायविरुद्धं मतं प्रतिषिध्य "न सर्वगुणानुपलब्धेः" इति चोदितं समाधीयते—

सूत्रम्—"पूर्वं पूर्वं गुणोत्कर्षं तत्तत् प्रधानम् ।"

भाष्यम्—तस्मान्न सर्वगुणोपलब्धिः, घ्राणादीनां पूर्वं पूर्वं गन्धादेर्गुणस्योत्कर्षात् तत्तत् प्रधानम् ।

प्र०—का प्रधानता ?

उ०—विषयग्राहकत्वम् ।

प्र०—को गुणोत्कर्षः ?

उ०—अभिव्यक्तौ समर्थत्वम् । यथा बाह्यानां पार्थिवाप्यतैजसानां द्रव्याणां चतुर्गुणत्रिगुणद्विगुणानां न सर्वगुणव्यञ्जकत्वम्, गन्धरसरूपोत्कर्षस्तु यथाक्रमं गन्धरसरूपव्यञ्जकत्वम्, एवं घ्राणरसनचक्षुषां चतुर्गुणत्रिगुणद्विगुणानां न सर्वगुणग्राहकत्वम, गन्धरसरूपोत्कर्षात् तु यथाक्रमं गन्धरसरूपग्राहकत्वम् । तस्माद् घ्राणादिभिर्न सर्वेषां गुणानामुपलब्धिरिति । यस्तु प्रतिजानीते गन्धगुणत्वाद् घ्राणं गन्धस्य ग्राहकम्, एवं रसनादिष्वपीति, तस्य यथागुणयोगं घ्राणादिभिर्गुणग्रहणं प्रसज्यते । इति ।

तदनेन महता सन्दर्भेण स्पष्टीभवति यत् पृथिव्यादिपरमाणवो यथादर्शनमेकानेक-गुणा इति । भवति चानेन प्रासङ्गिकशङ्कानामपि समाधानम्, भवति च सुनिरूपितं कस्मिन् परमाणौ के गुणा इति ।

## परमाणुगुणा नित्याः, किं वा अनित्याः ?

किं नित्याः परमाणुगुणाः, किं वा अनित्याः ? ननूपरिष्टात् प्रतिपादितं नित्याः खलु सर्वेऽपि परमाणव इति । तत् किं तेषां गुणा अपि नित्याः, किं वा अनित्या इति चेत्, अत्रोच्यते—पृथिवीजलतेजोवायूनां चतुर्विधपरमाणूनां मध्ये पृथिवीं विहाय शेषाणां त्रिविध-परमाणूनां गुणास्तावद् नित्याः, तेषां तत्तद्गुणानां निवृत्तिकारणाभावात् । पृथिवी-परमाणूनां गुणा रूपरसगन्धस्पर्शाः पुनः सर्वेऽप्यनित्याः, पाकवशेन तेषां परावर्तनदर्शनात् । पाको नाम तेजःसंयोगविशेषः । प्रत्यक्षं चानुभूयते पार्थिवपदार्थानां पत्रपुष्पफलादीनां रूपरसगन्धस्पर्शगुणा यथापाकं परिवर्तमानाः । तस्मात् पृथिवीपरमाणूनां नित्यत्वेऽपि तेषां गुणा अनित्याः । अप्तेजोवायूनां तु परमाणुषु नैषा स्थितिरिति तेषां गुणा अपि नित्याः । तथा चोक्तम्—

"रूपादिचतुष्टयं पृथिव्यां पाकजम्, अनित्यं च । अन्यत्रापाकजमनित्यं च । नित्यगतं नित्यम्, अनित्यगतमनित्यम् ।" इति ( तर्कसंग्रहः ) ।

## परमाणवो भोग्याः कि वा अभोग्याः ?

अथ परमाणवोऽपि किमस्माकं भोग्याः, किं वा अभोग्या इति विचारे न कैरपि दार्शनिकैरेषां समर्थितं भोग्यत्वम्, न च सम्भवति तथात्वम् । तथाहि भोगो नाम सुखदुःखसाक्षात्कारः । भोग्यता च पदार्थानां सुखदुःखानुभवसाधनता । न च परमाणवो भवन्ति स्वरूपेण कस्यापि सुखदुःखजनकानि । इन्द्रियद्वारा हि प्रवर्तते समस्तमपि भोग-जातं प्राणिनाम् । न च भवन्ति परमाणवः कस्यापीन्द्रियस्य विषयाः, नापि च तेषां रूप-रसादयो गुणाः । अत एवोच्यन्ते परमाणवोऽतीन्द्रियाः । यदि हि परमाणव एव साधयेयु-र्भोगान्, तर्हि न कोऽपि दारिद्रयमनुभवेत्, परमाणूनां सर्वत्र सुलभत्वात् । तथा च परमाणुत्वं न भोगसाधनतावच्छेदकम् । अत एव तत्तद्द्रव्याणां शरीरेन्द्रियविषयभेदानां व्याख्यानावसरे विषयप्रस्तावे विहाय परमाणून् द्व्यणुकादय एव विषयतया उदाह्रियन्ते । यथा—"विषयो द्व्यणुकादिश्च ब्रह्माण्डान्त उदाहृतः ।" इत्यादि ।

## किं नाम परमाणूनां कार्यं लोके ?

ननु यदि परमाणवो न भोग्याः प्राणिनाम्, तर्हि किं नाम परमाणूनां कार्यं लोके इति चेत्, अत्रोच्यते—जगतां रचनैव तावत् परमाणूनां कार्यम् । नहि परमाणूनामभावे

दृश्यमानप्रपञ्चरचना सम्भवति। पश्यामो वयं जगति यद् घटपटादयो विषया उत्पद्यन्ते प्रध्वंसन्ते च। दृश्यते सूक्ष्मतः स्थूलमित्युत्पत्तिनियमः। स्थूलतश्च सूक्ष्ममिति प्रध्वंस-नियमः। न च प्रध्वंसो निरन्तो भवितुमर्हति, तथा सति महाप्रलयानन्तरं सृष्टेरभावप्रसङ्गात्। तथा च स्थूलरूपेण जगतां विनाशेऽपि सूक्ष्मतया तदुपादानानां सत्ता महाप्रलयेऽपि वक्तव्या। यानि च जगतामुपादानानि प्रलयावस्थायां सन्तिष्ठन्ते, तानि परमाणव एव।

ननु "एकमेवाद्वितीयं ब्रह्म", "तदैक्षत बहुस्यां प्रजायेय", "तस्माद्वा एतस्मादात्मनः आकाशः संभूतः" इत्यादिश्रुतिबलेन सच्चिदानन्दस्वरूपं ब्रह्मैव जगतामुपादानं सिध्यति, न परमाणव इति चेत्, न; अखण्डचैतन्यस्वरूपस्य, "अशब्दमस्पर्शमरूपमव्ययम्" इत्यादि-श्रुतिप्रतिपादितस्य ब्रह्मणः शब्दस्पर्शादिविलक्षणगुणवतामचेतनानां जगतामुपादानत्वा-संभवात्।

ननु मा भूत् चेतनं ब्रह्म जगतामुपादानम्, नित्या अचेतना प्रकृतिः सत्त्वरज-स्तमोमयी नियतपरिणामशीला भवतु तथा। उच्यते च तथा सांख्यकारिकायाम् :—

प्रकृतेर्महांस्ततोऽहङ्कारस्तस्माद् गणश्च षोडशकः।
तस्मादपि षोडशकात् पञ्चभ्यः पञ्चभूतानि॥
इत्येष प्रकृतिकृतो महदादिविशेषभूतपर्यन्तः।
प्रतिपुरुषविमोक्षार्थं स्वार्थ इव परार्थ आरम्भः॥ इति।

× × ×

प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः।
(श्रीमद्भगवद्गीता)

इति चेत्, तदपि न; प्रकृतेरचेतनतया स्वातन्त्र्येण जगत्कर्तृत्वासम्भवात्। चेतनपुरुषा-धीनतया सम्भवति प्रकृतेस्तथात्वमिति चेत्, इष्टापत्तिः। नैवं सति प्रकृतिवादे परमाणुवादे च तिष्ठति परिभाषाभेदेन प्रक्रियाभेदमन्तरा कोऽपि विशेषः। परमाणुवादिभिरप्यदृष्टस्य प्रकृतिसंज्ञास्वीकारात्। तथा चोक्तं श्रीमदुदयनाचार्येण :—

इत्येषा सहकारिशक्तिरसमा माया दुरुन्नीतितो।
मूलत्वात् प्रकृतिः प्रबोधभयतोऽविद्येति यस्योदिता॥ इति।

## का नाम परमाणुभ्यो जगदुत्पत्तिप्रक्रिया ?

अथ यदि परमाणुभ्यो जगद्रचना, तर्हि किं तत्तद्द्रव्यापेक्षितसंख्यया परमाणूनां राशीभावादेव निष्पद्यन्ते द्रव्याणि, किं वा तत्रापेक्ष्यते कोऽपि क्रमविशेष इति चिन्तायां या खलु प्रक्रिया परमाणुवादिभिः स्वीक्रियते समर्थ्यते च, साऽधस्तात् प्रस्तूयते।

२०

प्रथमं तावत्—"अग्नेरूर्ध्वज्वलनम्, वायोस्तिर्यक्पवनम्, अणूनां मनसश्चाद्यं कर्म अदृष्टकारितम्" इति वैशेषिकसूत्रानुसारमदृष्टवत् क्षेत्रज्ञसंयोगात् परमाणौ कर्म। ततोऽसौ परमाण्वन्तरेण संयुज्य द्व्यणुकमारभते। बहवश्च परमाणवः संयुक्ता न सहसा स्थूलमारभन्ते, परमाणुत्वे सति बहुत्वाद् घटोपगृहीतपरमाणुवत्। नहि घटोपगृहीताः परमाणवो घटमारभेरन्, तथा सति न घटे प्रविभज्यमाने कपालशर्करादि उपलभ्येत, तेषामनारब्धत्वात्, घटस्यैव तु तैरारब्धत्वात्। तदवयवानां परमाणूनाञ्चातीन्द्रियत्वात्। तस्मान्न बहूनां परमाणूनां द्रव्यं प्रति समवायिकारणत्वम्, अपि तु द्वावेव परमाणू द्व्यणुकमेकमारभेते। तस्य चाणुत्वं परिमाणं परमाणुपरिमाणात् पारिमण्डल्यादन्यदेव ईश्वरबुद्धिमपेक्ष्योत्पन्ना द्वित्वसंख्या समारभते।

न च द्व्यणुकाभ्यां द्वाभ्यां द्रव्यस्यारम्भः, वैयर्थ्यप्रसङ्गात्। तदपि हि द्व्यणुकमेव भवेत्, न तु महत्, कारणबहुत्वमहत्त्वप्रचयविशेषेभ्यो हि महत्त्वोत्पत्तेः। तथा च वैशेषिकं सूत्रम् "कारणबहुत्वात्, कारणमहत्त्वात्, प्रचयविशेषाच्च महत्" इति। न च द्व्यणुकयोरस्ति महत्त्वम्, यतस्ताभ्यामारब्धं भवेन्महत्। नापि च तयोर्बहुत्वम् द्वित्वादेव। न च प्रचयभेदस्तूलपिण्डानामिव, तदवयवानां निरवयवत्वेन प्रशिथिलावयवसंयोगभेदविरहात्। तस्मात् तेनापि तत्कारणद्व्यणुकवदणुनैव भवितव्यम्। तथा च पुरुषोपभोगातिशयाभावात्, अदृष्टनिमित्तत्वाच्च विश्वनिर्माणस्य भोगार्थत्वात् तत्कारणेन द्व्यणुकेनैव तन्निष्पत्तेः कृतं द्व्यणुकाश्रयेण द्व्यणुकान्तरेण, आरम्भवैयर्थ्यात्। आरम्भसार्थकत्वाय बहुभिरेव द्व्यणुकैस्त्र्यणुकं चतुरणुकं वा द्रव्यं महद् दीर्घं चारब्धव्यम्। अस्ति हि तत्र भोगभेदः। अस्ति च बहुत्वसंख्या ईश्वरबुद्धिमपेक्ष्योत्पन्नमहत्त्वपरिमाणहेतुः। द्व्यणुकादिभिरारब्धं तु कार्यद्रव्यं कारणबहुत्वाद् वा, कारणमहत्त्वाद् वा, प्रचयविशेषाद् वा महद् भवति।

अथ कारणगुणा कार्ये गुणान्तरमारभन्ते। तथाहि यदा द्वौ परमाणू द्व्यणुकमारभेते, तदा परमाणुगता रूपादयो गुणविशेषाः शुक्लादयो द्व्यणुके शुक्लादीनपरानारभन्ते।

अथापि परमाणुगुणविशेषः पारिमाण्डल्यं नाम न द्व्यणुके पारिमाण्डल्यमारभते, द्व्यणुकस्य परिमाणान्तरयोगाभ्युपगमात्; अणुत्वह्रस्वत्वे हि द्व्यणुकगते परिमाणे। यदाहि द्वे द्वे द्व्यणुके चतुरणुकमारभेते, तदापि समानं द्व्यणुकसमवायिनां शुक्लादीनामारम्भकत्वम्। यदाऽपि बहवः परमाणवो बहूनि वा द्व्यणुकानि द्व्यणुकसहितो वा परमाणुः कार्यमारभते, तदापि समानैषा प्रक्रियेति।

अथ पुनरस्यां प्रक्रियायां कमपि विशेषमाश्रयन्तः केऽपि प्रतिपादयन्ति यद् यथा द्व्यणुकद्वयेन कार्यारम्भे प्रमाणाभावात्, अविशेषापत्तेश्च नास्ति द्व्यणुकद्वयेन कार्यारम्भः, तथैव परमाणुद्वयेनापि कार्यारम्भे प्रमाणाभावात् परमाणुत्रयेणैव प्रथमतः कार्यारम्भः। तदिदं परमाणुत्रयारब्धमेव कार्यं द्व्यणुकमिति व्यपदिश्यते। तस्यैव च त्रसरेणुरिति नामान्तरं रूढमिति।

तदित्थं सयुक्तिकं स्पष्टीभवति परमाणुभ्यो जगतामुत्पत्तेः प्रक्रियाविशेषो यदात्मसमवेत-धर्माधर्मपरिपाकानुरूपप्रसरदीश्वरेच्छाप्रेर्यमाणपरमाणुक्रियानुपूर्वीनिर्वर्त्यमानद्व्यणुकादिकार्य - क्रमेण भोगायतनानां शरीराणाम्, भोगसाधनानामिन्द्रियाणाम्, भोग्यानां मृत्पाषा-णादिविषयाणां च विचित्राणामवयविनां पदार्थानां निष्पत्तिरिति।

तथा च तन्तुभिरेव पट आरभ्यते, न तन्तूनामवयवैरंशुभिः। अन्यथा ह्युत्तरोत्तर-कार्यारम्भेऽपि पूर्वपूर्वकारणानपायाद् भवेद् मूर्तानामेकदेशत्वम्, न च तथा दृश्यते।

तदनया क्रमशः खण्डावयविविकासपरम्परया चरमावयविनिष्पत्तिप्रक्रियया अङ्कु-रायते परमाणुभ्यो भिन्नतया अवयविनां सत्ताकल्पना।

## किं नाम परमाणुपुञ्जरूपाण्येव स्थूलद्रव्याणि ?

तामसहमानाः परमाणुपुञ्जवादिनः प्रत्यवतिष्ठन्ते—भवतु नाम परमाणुभ्यो घट-पटादिकार्यद्रव्याणां रचना, तथापि न तत्रावयवावयविद्रव्यभेदकल्पनमुचितम्, तत्तदात्मना समुदितानां परमाणूनां पुञ्जैरेव घटपटादिव्यवहारसिद्धौ तादृशभेदे प्रमाणाभावादिति।

प्रत्याख्यायते चायं पक्षः परमाणोरतीन्द्रियत्वेन तत्समुदायस्यापि प्रत्यक्षत्वायोगाद् घटपटादीनामप्रत्यक्षत्वप्रसङ्गात्।

न चादृश्यपरमाणुपुञ्जाद् दृश्यपरमाणुपुञ्जोत्पत्तेर्न प्रत्यक्षत्वासम्भव इति वाच्यम्, अदृश्यस्य दृश्यानुपादानत्वात्। अन्यथा चक्षुरूष्मादिसन्ततेरपि कदाचिद् दृश्यत्वप्रसङ्गात्।

न चादृश्यद्व्यणुकेन कथं दृश्यत्रसरेणोरुत्पत्तिरिति वाच्यम्, त्रसरेणौ महत्त्वयोगाद् दृश्यत्वसंभवात्। न चेदं परमाणुपुञ्जे सम्भवति, परमाणुषु महत्त्वाभावात्। 'एकः स्थूलः' इति प्रत्ययानुपपत्तेश्च नावयविनः परमाणुपुञ्जरूपा इति।

## परमाणुष्वाक्षेपाः

तदित्थं प्रतिपाद्यते परमाणूनां जगदारम्भकत्वम्। न पुनरिदं सहन्ते ब्रह्मवादिनो वेदान्तिनः, प्रत्याचक्षते च साटोपम्। तथाहि भवति श्रीव्याससूत्रम्-"उभयथापि न कर्म, अतस्तदभावः" इति।

व्याचक्षते च श्रीशङ्कराचार्याः—

प्रलये विभागावस्थायां तावदणूनां संयोगः कर्मापेक्षो मन्तव्यः, कर्मवतामेव तन्त्वादीनां संयोगदर्शनात्। कर्मणश्च कार्यत्वाद् निमित्तं किमप्यभ्युपगन्तव्यम्। अभ्युपगमेऽपि यदि प्रयत्नोऽभिघातादिर्वा यथादृष्टं किमपि किमपि कर्मणो निमित्तमभ्युपगम्यते, तस्यासम्भवाद् नाणुष्वाद्यं कर्म स्यात्। न हि तस्यामवस्थायामात्मगुणः प्रयत्नः सम्भवति, शरीराभावात्। शरीरप्रतिष्ठे हि मनस्यात्मनः संयोगे सति आत्मगुणः प्रयत्नो जायते। एतेनाभिघाताद्यपि दृष्टं निमित्तं प्रत्याख्यातव्यम्। सर्गोत्तरकालं हि तत् सर्वं नाद्यस्य कर्मणो निमित्तं सम्भवति।

अथादृष्टमाद्यस्य कर्मणो निमित्तमित्युच्यते, तत् पुनरात्मसमवायि वा स्यात्, अणुसमवायि वा? उभयथापि नादृष्टनिमित्तमणुषु कर्मावकल्पेत, अदृष्टस्याचेतनत्वात्। न ह्यचेतनं चेतनेनानधिष्ठितं स्वतन्त्रं प्रवर्तते, प्रवर्तयति वा। आत्मनश्चानुत्पन्नचैतन्यस्य तस्यामवस्थायामचेतनत्वात्।

आत्मसमवायित्वाभ्युपगमाच्च नादृष्टमणुषु कर्मणो निमित्तं स्यात्, असम्बन्धात्। अदृष्टवता पुरुषेणास्ति परमाणूनां सम्बन्ध इति चेत्, सम्बन्धसातत्यात् प्रवृत्तिसातत्यप्रसङ्गो नियामकान्तराभावात्। तदेवं नियतस्य कस्यचित् कर्मनिमित्तस्याभावाद् नाणुष्वाद्यं कर्म स्यात्। कर्माभावात् तन्निबन्धनः संयोगो न स्यात्। संयोगाभावाच्च तन्निबन्धनं द्व्यणुकादिकार्यजातं न स्यात्।

संयोगश्चाणोरण्वन्तरेण सर्वात्मना वा स्यात्, एकदेशेन वा? नाद्यः, उपचयानुपपत्तेः, दृष्टविरोधाच्च। प्रदेशवतो हि द्रव्यस्य प्रदेशवता द्रव्यान्तरेण संयोगो दृष्टः। एकदेशेन चेत्, सावयवत्वप्रसङ्गः। नापि परमाणूनां प्रदेशकल्पनया निर्वाहः, तथा सति संयोगस्यापि कल्पितत्वेनावस्तुत्वापत्तेः। तथा चासत्यसमवायिकारणे संयोगे द्व्यणुकादिकार्यद्रव्यं नोत्पद्येत।

यथा चादिसर्गे संयोगाय कर्माभावः, तथा महाप्रलयेऽपि विभागाय कर्मासम्भवः। अदृष्टमपि भोगप्रसिद्ध्यर्थम्, न प्रलयार्थम्। तस्मादनुपपन्नः परमाणुकारणवादः।

अपि च रूपादिमत्त्वात् परमाणूनामणुत्वनित्यत्वविपर्ययः प्रसज्येत, रूपादिमतां घटपटादीनामनित्यत्वदर्शनात्।

किं च, परमाणुषु यथायथं गुणोपचयस्वीकारे मूर्त्त्युपचयावश्यकत्वेन परमाणुत्वभङ्गः प्रसज्येत, लोके गुणोपचये मूर्त्युपचयदर्शनात्। परमाणुत्वसाम्याय गुणोपचयास्वीकारे

परमाणूनामेकैकमात्रगुणत्वे पृथिव्यां गन्धं विहाय रूपादीनामनुपलब्धिः स्यात्। एवमन्येष्वपि। सर्वेषां सर्वगुणत्वे पुनर्जलेऽपि गन्धोपलब्धिः स्यात्। एवमन्येष्वपि। तस्मादनुपपन्नः परमाणुकारणवाद इति।

## समाधानं संक्षेपेण

तदित्थमाक्षिप्यते बहुधा परमाणुकारणवादः। समाधीयते च परमाणुवादिभिस्तत्र मुख्याक्षेपः सर्गादौ समाधानं संक्षेपेण महाप्रलये च कर्मानुपपत्तिरूपः, तदानीमीश्वरेच्छाया नियामकतामवलम्ब्य, नित्यत्वाक्षेपश्चाकारणवत्त्वमाश्रित्य, मूर्त्युपचयाक्षेपश्च मूर्त्युपचयस्य द्रव्याणुसंयोगमात्रनिबन्धनतामाश्रित्य। सेयमाक्षेपसमाधानपरम्परा समापतति बहुविस्तारमिति विस्तारभयान्नेह वितन्यते।

तदित्थमेतावता प्रपञ्चेन पर्यालोचिताः प्राचीनानां परमाणुविचाराः। अथेदानीं प्रस्तूयन्तेऽर्वाचीनानामभिमताः परमाणुसिद्धान्ताः।

## अर्वाचीनाः परमाणुविचाराः

अर्वाचीना हि वैज्ञानिका नास्थां कुर्वन्ति प्राचीनानाम् आकाशवाय्वादिभूत-परम्परया सृष्टिविकासे, तथापि भौतिकपदार्थानां गुणधर्मपरीक्षानिरता मन्यन्ते सृष्टिघटकतया स्थितानि कान्यपि तत्त्वान्तराणि, स्वीकुर्वन्ति च तेषां परमाणुरूपतामपि। तथाहि—

पृथ्वीनाम्ना परिचितायां मृत्तिकायां यन्त्रादिभिर्विश्लेषणपरीक्षया आक्सिजन-सिलिकनप्रभृतयो द्वादशविरुद्धगुणधर्माणि तत्त्वानि लभ्यन्ते। एवं जले हाईड्रोजन-आक्सि-जननामानौ द्वौ विरुद्धधर्माणौ पदार्थौ। अग्नौ तु गुरुत्वादिद्रव्यधर्माभावाद् नायं द्रव्यरूपः, किन्तु शक्तिरूप एव। वायौ नाइट्रोजन-आक्सिजनप्रभृतीनां संमिश्रणं दृश्यते। आकाशस्य तु शून्यतया सर्वथाऽलीकत्वमेव प्रतिपद्यते।

तदित्थं पञ्चादिभिर्विश्लेषणे कृते तत्र लभ्यमाना आक्सिजनादयः पदार्था एव मूल-तत्त्वानि, तेषां पुनर्विश्लेषणादर्शनात्। स्थिरीकृतानि च वैज्ञानिकैः कान्यपि तत्त्वलक्षणानि। तथाहि—

विश्लेषे वा विभागे वा यथाशक्तिकृते यतः। १।
विजातीयो न निर्गच्छेत् सारस्तत्त्वं तदुच्यते॥
तत्त्वानां परमः सूक्ष्मः कश्चिदणुर्भवेद् ध्रुवम्। २।
आयतनं गुरुत्वं च घनत्वं रूपमेव च। ३।
भवेयुः सर्वतत्त्वेषु चत्वार्येतानि सर्वदा॥

तत्त्वमेकं सदा भिन्नं स्वभावगुणतोऽन्यतः । ४ ।
अन्तरा प्रबलां शक्तिं सूक्ष्मांशोऽस्य न भिद्यते । ५ ।
तत्त्वं हि जनयेत् कार्यं स्वयं न जन्यतेऽन्यतः । ६ ।
तत्त्वं कुर्वत् स्वकं कार्यं स्वस्वरूपं न मुञ्चति ।
आयतनादिकं कार्यं विभिन्नं कारणाद् ध्रुवम् ।
नियतेनानुपातेन तत्त्वसंश्लेषणं सदा । ७ । इति ।

तदेतल्लक्षणलक्षितानि नवतितोऽप्यधिकानि तत्त्वानि सृष्टिघटकतया वैज्ञानिकैरभिमतानि ।

ब्रह्माण्डे कुत्रापि गम्यतां दृश्यतां च कोऽपि पदार्थः, सर्वेऽपि पदार्था एतेषामेव तत्त्वानां संघटनेन निर्मिताः प्रतीयन्ते । भौतिकविज्ञानस्य ज्योतिर्विज्ञानस्य च सहायतयाऽद्य ज्ञातुमेतदतीव सरलं यद् ब्रह्माण्डेऽस्मिन् सुदूरस्थेऽपि नक्षत्रे कानि नाम तत्त्वानि घटकतया स्थितानि । प्रत्येकं तत्त्वस्य स्वकीयप्रकाशस्य विलक्षणतया कस्मादपि नक्षत्रादागच्छता प्रकाशेन सरलतया ज्ञातुमेतच्छक्यते यत् कीदृशी नाम तस्य नक्षत्रविशेषस्य प्राकृतिकी संघटना । अर्थात् केषां नाम तत्त्वानां संयोगेन तस्य नक्षत्रस्य सञ्जाता रचनेति ।

तदित्थं भौतिकविज्ञानस्येतिहासे सुचिरादिमानि तत्त्वानि सृष्टेर्मूलाधारतया मन्यन्ते व्यवह्रियन्ते च । तेषां सूक्ष्मतमा अवयवा एटम( परमाणु )संज्ञया स्वीकृताः । त एते एटमसंज्ञकाः परमाणवोऽविभाज्याः प्राचीनानां परमाणुवत्, किन्त्विदानीं तेषामपि स्वरूपरचनाया विश्लेषणपरीक्षया सुसिद्धं यद् नैते अविभाज्याः, किन्तु शक्यन्ते भेत्तुं केनापि प्रबलेन शक्त्याघातेनेति ।

ननु यदीत्थं तर्हि के नाम ते परमाणु( एटम )घटका अवयवा इति चेत्, उच्यते, सौरमण्डलवत् खलु परमाणोः स्वरूपरचना । यथा हि सौरमण्डले सूर्यं केन्द्रीकृत्य तं परितो नक्षत्राणि भ्रमणं कुर्वन्ति, तथैव परमाणुस्वरूपेऽपि किमपि केन्द्रं नामीकृत्य तत् परितो बहुसंख्यका भ्रमन्त्यणुविशेषाः । द्विविधाः खल्वणुविशेषाः परमाणुस्वरूपघटकतया स्थिताः । तत्रैके केन्द्रस्थाः, तदितरे च केन्द्रं परितो भ्रमिस्थाः । तथा चाणुविशेषाणां समवायात्मकः परमाणुः । ते चाणवो विद्युत्कणविशेषाः । द्विविधा खलु विद्युत्–संयोगात्मिका वियोगात्मिका च । तत्र संयोगात्मिका व्यवह्रियते धनविद्युत्संज्ञया, वियोगात्मिका च ऋणविद्युत्संज्ञया । तत्र परमाणुकेन्द्रस्था धनविद्युत्कणाः प्रोटनसंज्ञकाः, तान् परितो भ्रमणशीलाश्च

ऋणविद्युत्कणा इलेक्ट्रनसंज्ञका:। तदित्थं प्रोटन-इलेक्ट्रनविद्युत्कणसमवायरूप एक: परमाणुपिण्ड:। तादृशैश्च परमाणुभिरारब्धानि द्रव्याण्यपि विद्युत्कणमयानि। कस्यापि पदार्थस्य गुरुत्वं स्वरूपं च तस्य नाभिस्थेषु प्रोटनकणेषु निर्भरम्। विभिन्नजातीयद्रव्याणां परमाणुषु भवति प्रोटनकणानां संख्या प्रतिनियता। यावदेषां कणानां प्रतिनियता संख्या सुस्थिरा, तावत् तस्य द्रव्यस्य स्वरूपमपि सुस्थिरम्, किन्तु यथैव सा संख्या केनापि कारणेन प्राप्नोति भङ्गम्, तथैव खलु भवति तस्य द्रव्यविशेषस्य स्वरूपभङ्ग:। यथा रजतस्य सुवर्णस्य च परमाणुषु नास्ति कोऽपि स्वरूपतो भेद:। उभयस्यापि परमाणवस्तैरेव द्विविधैर्विद्युत्कणैर्निर्मिता:, तथापि भवति तयो: परमाणुषु प्रोटनकणानां संख्याभेद: प्रतिनियत:। तेनैव च भवति सुवर्णरजतयो: स्वरूपभेद:।

इदमेव च रहस्यमस्ति पारदत:, ताम्रत:, रजतत:, सीसकतो वा सुवर्णनिर्माणस्य। तथाहि पारदस्य परमाणौ २०० संख्याका: प्रोटनकणा नाभिस्था:, ८० संख्याकाश्च इलेक्ट्रनकणा: प्रोटनकणान् परिवृत्य भ्रमन्त: स्थिता:। यावदेव तेषां संख्या सुस्थिरा, तावत् पारदपरमाणवस्तिष्ठन्ति तिष्ठति च पारदं पारदत्वेन। यदि पुनरेषां कणानां संख्या केनाप्युपायेन न्यूनाधिकीक्रियते, तर्हि नश्यति पारदस्य स्वरूपम्, जायते च द्रव्यान्तरम्।

यथा सुवर्णस्य परमाणौ १९७ संख्या प्रोटनकणानां प्रतिनियता, तथा पारदस्य परमाणौ २०० संख्या। यदि पारदपरमाणौ प्रोटनकणानाम् ३ संख्या न्यूनीक्रियेत, तर्हि पारदं परिवर्तते सुवर्णरूपेण। एवमेव सीसकस्य परमाणौ २०७ संख्या प्रतिनियता प्रोटनकणानाम्। तेषु यदि १० संख्या न्यूनीक्रियेत, तर्हि सीसकं परिवर्तते सुवर्णात्मना।

तदित्थं नवीनवैज्ञानिकसरण्या विद्युत्कणसमवायमात्राणि परमाणव:। तत्रैकस्मिन् परमाणौ यावन्त: क्रियाशीला इलेक्ट्रनकणास्तावती तस्य परमाणोराणविकी संख्या परिगण्यते। एवमेव तत्र यावन्त: प्रोटनकणा:, तावत्परिमितमेव मन्यते तस्य परमाणोराणविकं गुरुत्वम्। इलेक्ट्रनकणेषु विद्यमानमपि गुरुत्वमत्यल्पत्वाद् नगण्यतामेति।

अथ केनापि प्रबलेन शक्त्याघातेन परमाणुभङ्गकाले यदा तत्रत्या: प्रोटनकणा निर्भिद्य परमाणुपिण्डं निर्यान्ति बहि:, तदा तै: सह केनाप्यनुपातेन इलेक्ट्रनकणा अपि निर्गच्छन्ति तत इति परमाणुस्वरूपे सञ्जायते सर्वथापि परिवर्तनम्।

सर्वेऽपि खल्वेते इलेक्ट्रनकणास्तुल्यपरिमाणाः समानशक्तिकाः शब्दादीन्द्रियग्राह्यगुणहीनाश्च। तथाविधा एव च प्रोटनकणा अपि सर्वे। एतेषां प्रोटन-इलेक्ट्रनकणानां संख्याया घनतायाश्च भेदेन परमाणुषु जायते आयतनभेदो गुरुत्वभेदश्च।

अथ केषाञ्चिद् वैज्ञानिकानां मतेनैकस्मिन् परमाणौ यावन्तः सक्रिया इलेक्ट्रनकणाः, त एव इलेक्ट्रनसंज्ञाभाजः, तदपरे तु निष्क्रियास्ते भवन्ति पोजीट्रननामभाजः। सक्रियेलेक्ट्रनसमसंख्याका एव च भवन्ति परमाणौ प्रोटनकणाः, व्यपदिश्यन्ते च ते न्यूट्रननाम्ना। तथा च द्विविधविद्युत्कणानां समसंख्याकत्वाद् भवन्ति परमाणवो विद्युन्निरपेक्षा इति।

'रसायनशास्त्रमर्यादया कस्यापि पदार्थस्याणवो भज्यमाना गच्छन्ति परमाणुताम्। पुनश्च ते परमाणवो विजातीयपरमाणुभिर्मिलिता अणुभावमापद्यमाना आरभन्ते पदार्थान्तरम्' इत्येकेभ्य एव परमाणुभ्यो भिन्नभिन्नपदार्थारम्भस्य प्रक्रिया।

अथ पुनर्भौतिकशास्त्रमर्यादया त एव परमाणवः कणशो भज्यमानाः परिवर्तन्ते शक्तिरूपेण, कणशः संयुज्यमानास्तु पुनः पदार्थरूपेणेति भवति शक्तेः पदार्थस्य च परस्परसंबन्धः।

तदित्त्थं भवन्त्याधुनिकवैज्ञानिकानां परमाणुसम्बन्धिनो विचाराः, ये सततं परीक्षाक्रमेणोत्तरोत्तरं परिष्कारोन्मुखा इति। तन्मते के नाम वस्तुतः परमाणव इति नाद्यावधि सिद्धान्ततया स्थिरीभूतम्। इदानीं यावद् इलेक्ट्रन-प्रोटनसमवेतस्याणोरेव परमाणुता स्वीकृता। इदानीं तु तत्समवायिनां कणानां परमाणुता प्रतिभाति, तथापि तत्समवेताणुष्वेव चिरात् प्रवृत्ता परमाणुसंज्ञा रूढतयेवाद्यापि तथैव प्रचलति। सम्भाव्यते पुनरिदं यत् तेषां प्रोटन-इलेक्ट्रनकणानामपि विश्लेषणपरीक्षया प्रकटीभवेत् किमपि रहस्यं तत्समवायितया।

अथ यद्यपि तथोक्तेषु प्रोटन-इलेक्ट्रनकणेषु वैज्ञानिकैरिन्द्रियग्राह्यशब्दस्पर्शरूपरसादिगुणानामभावः प्रतिपाद्यते, तथापि न तत्र तेषां सर्वथाभावो वक्तुमुचितः, अन्यथा कथं पुनस्तत्समवेतेषु परमाणुषु रूपरसादीनां भवेत् समागमः। "कारणगुणा एव कार्यगुणानारभन्ते" इति हि सामान्यसिद्धान्तः। तथा च तत्राप्यव्यक्तरूपेण तेषां सत्ता वक्तव्येति तेषां तत्तद्भौतिकतामास्थाय तत्समवेतस्य परमाणुपिण्डस्यापि पाञ्चभौतिकतामुपपादयन्ति केचिद् भारतीयदार्शनिकाः। तथाहि—

एटमाख्यस्य परमाणोर्बाह्यप्रदेशे केन्द्रकस्य समन्ताद् भ्रमणशीलाः, गतिस्पर्शजनकाः, सक्रिया य इलेक्ट्रनकणास्ते वायव्याः, वायुप्रधानत्वात्। ये खलु बद्धा निष्क्रियाश्च ते तैजसाः। एते यदा केनचित् कारणेनोत्तेजिताः सन्तः सक्रिया जायन्ते, तदा तेभ्य एव तापालोकौ नाम तेजोधर्मौ आविर्भवतः। निष्क्रियावस्थायामपि ते रूपं जनयन्तो न वायवीयेनाभ्रियन्ते। येषां लौहसुवर्णपारदादीनाम् एटमनामके अण्ववयवे तादृशतैजसावयवानां वायव्यापेक्षया भवत्याधिक्यम्, तेषामतिगुरूणामपि तैजसत्वं प्राचीनैरङ्गीक्रियते। केन्द्रकस्थितानां प्रोटनकणानां मध्ये ये रसाधिकास्ते जलीयाः, ये च गन्धाधिकास्ते पार्थिवा इति।

यथा खलु अर्वाचीनैरिलेक्ट्रनकणेषु विद्यमानमपि गुरुत्वमत्यल्पतया न गण्यते, केवलं प्रोटनकणानामेव गुरुत्वं गण्यते। एवं प्राचीनैरपि क्षितिजलयोरेव गुरुत्वं वर्णितम्, वायुतेजसोस्तु लघुत्वम्।

तदेतेषां चतुर्विधानाम् इलेक्ट्रन( वायवीय )पाजीट्रन( तैजस )न्यूट्रन( जलीय ) प्रोटन( पार्थिव )-संज्ञकानां कणानामन्तराले ईथराख्यं यत् सूक्ष्मं द्रव्यं तिष्ठति तत् खल्वाकाशीयम्। तथा च सिध्यत्येकस्य परमाणु( एटम )–पिण्डस्य पाञ्चभौतिकत्वम्।

तदित्थं यथामति निरूपिता मया प्राचीना अर्वाचीनाश्च परमाणुसम्बन्धिनो विचाराः।

परमाणुचिन्ताप्रसङ्गेन हि जगतामादिरहस्यान्वेषणे प्रवृत्तैः प्राचीनभारतीयदार्शनिकैः संस्थापिताः खल्वनेके सिद्धान्ता यथागति यथामति च।

अथेदानीं वैज्ञानिका अपि स्वकीयप्रक्रियाभिः प्रविविक्षवो जगतामादिरहस्ये। तदस्मिन् विषये उत्तरोत्तरं परिष्कारपरास्तेषां विचाराः।

जिज्ञासापराश्च वयं कानि नाम रहस्यानि वैज्ञानिकान्वेषणैः प्रकटीभवन्ति, किञ्च भवन्ति वा न वा तानि प्राचीनभारतीयदार्शनिकसिद्धान्तानुकूलानीति। अथान्ते विरम्यते शब्दैरेतैः सह—

मुनीनां ज्ञानपाथोधेः सङ्गृह्य परमाणुकान्।
गुरूणां कोऽपि शिष्याणुः परमाणूनचिन्तयत्॥
श्रीकृष्णार्पणविधया मिलन्त्वेते श्रमाणवः।
श्रीकृष्णचरणद्वन्द्वरजसां परमाणुषु॥



२१

# करणार्थकः √कृ ( डुकृञ् ) : अर्थविज्ञानम्

डॉ. भागीरथप्रसादत्रिपाठी 'वागीशः शास्त्री'
सञ्चालकः
अनुसन्धानसंस्थानस्य, वाराणसेयसंस्कृतविश्वविद्यालये ।

√कृ ( डुकृञ् ) ८।९ करणे ( उ )। हिंसार्थकयोः √कृ ५, √कॄ ९ इत्यनयोः, विक्षेपार्थकस्य च √कॄ ( कॄञ् ) इत्यस्य चेह संक्रमः। करणार्थकोऽयं कृधातुः क्रियासामान्यवाची ( द्रष्ट० वाक्यप० उपग्र० १४ प्रकीर्णटीका ) इति सर्वेषु धातुष्वनुगतस्तेषां विवरणं कर्तुमर्हति—पचति = पाकं करोति, गच्छति = गमनं करोति, भवति = सत्तां करोति, शेते = शयनं करोतीति। इत्थं करोतिना सर्वधात्वर्थानुवादः शक्यते कर्तुम्। संस्कृतवाङ्मय एष द्वेधा प्रयुज्यमानो विविधानर्थानाख्याति—१. कस्यचिदुपपदस्य साहाय्येन, २. उपपदस्य साहाय्यं विना चेति। इह तावत् प्रथममुपपदसाहाय्येन जाता विविधा अर्था विविच्यन्ते—

१. ऋग्वेदे ( ८, ९३, ८ ) 'इन्द्रः स दामने कृत ओजिष्ठः' इत्यत्र दामने = स्तोतृभ्यो धनादिदानायैव, कृतः = प्रजापतिना सृष्ट इति प्रसङ्गात् कृधातोरुत्पादनमर्थः।

ब्राह्मणोऽस्य मुखमासीद् बाहू राजन्यः कृतः।
ऊरू तदस्य यद् वैश्यः पद्भ्यां शूद्रो अजायत ॥

( ऋ० १०, ९०, १२ )

मन्त्रेऽस्मिन् 'कृतः' इत्यस्य 'बाहुत्वेन निष्पादितः' इत्यक्षरार्थः। वस्तुतस्तु 'बाहुभ्यामुत्पादितः' इत्यर्थः, अन्तिमचरणे 'अजायत' इति क्रियया तथैव दर्शनात्। 'सहश्चित् सहीयान् देवो जीवातवे कृतः' ( ऋ० १०, १७६, ४ ) इत्यत्र जीवातवे = जीवनहेतवे यागाय, कृतः = ब्रह्मणा सृष्ट इति प्रासङ्गिकोऽर्थः। 'व्यापारो भावना सैवोत्पादनापि च सा क्रिया' इति वैयाकरणभूषणसारे भट्टोजिदीक्षितकारिकागतस्य क्रियाशब्दस्योत्पादनमर्थः। 'तयोर्नित्यं प्रियं कुर्यात्' ( मनु० २,२२८ ) इह यद्यपि 'कुर्यात्' इत्यनेन पूर्णतया जायते भावाभिव्यक्तिः, तथाप्यभिप्रेतक्रियायाश्चित्रोपस्थापने कुर्यादिति नितरामसमर्थं पदम्। एवं स्थितौ कृधातुसंबद्धस्य 'प्रिय' इत्यस्य भावचित्रमुपस्थापनीयम्। सेवादिभावोत्तरं प्रीतिरुत्पद्यत इति कृधातुरिहोत्पादनार्थकः। प्रियं कुर्यात् = प्रीतिमुत्पादयेद् इति तदर्थः।

२. हविष्पदसंनिधानेन कृतशब्दः पक्वार्थमभिव्यनक्ति—'दक्षिणे संगृभीता कृतानि' (ऋ० १, १००, ९)। अन्नपदसंनिधानेनापि तथार्थो मनुस्मृतौ (९, २१९)—

वस्त्रं पत्रमलङ्कारं कृतान्नमुदकं स्त्रियः।
योगक्षेमं प्रचारं च न विभाज्यं प्रचक्षते ॥

कृतम् = संस्कृतं (सिद्धं) च तदन्नं चेति कृतान्नमिति तात्त्विकोऽर्थः। इह कृतान्न-पदेन खल्वोदनसक्त्वादि गृह्यते मन्वर्थमुक्तावल्याम्। 'सर्वान् रसानपोहेत कृतान्नं च तिलैः सह' (मनु० १०, ८६) इत्यत्रापि तथैव वेदितव्यम्।

३. ऋग्वेदे (१, २४, ९) 'कृतं चिदेनः प्र मुमुग्ध्यस्मत्' इत्यत्र पापपदसंनिधाने-नानुष्ठानमर्थः कृधातोः (द्रष्ट० ऋ० १, २४, १४)। 'धर्मक्रियात्मचिन्ता च' (मनु० १२, ३१) इत्यत्र धर्मपदसांनिध्येन क्रियाया अभिप्रायस्तावद् अनुष्ठानम्। आचरणरूपार्थ-स्यापीहैव गतार्थता (द्रष्ट० ऋ० १०, १३५, ६)।

४. रज्जुपदसांनिध्येन कृधातोरर्थो बन्धनमिति। तथा चर्ग्वेदे (१, १४१, ८) 'रथो न यातः शिक्वभिः कृतः' इत्यत्र सायणः—'कृतः = बद्धः' इति। 'अस्पृश्योदकं सम्यङ् मुनिः स्थित्वा कृताञ्जलिः' (वा० रा० १, ३, २) इतीह करयोजनपूर्वकमञ्जलिरचनारूप-व्यापारे ग्रथनं बन्धनं वाऽभिलक्ष्यत इति 'बद्धाञ्जलिः' 'रचिताञ्जलिः' वा तदर्थः। वा० रा० (२, २५, ३८)—

औषधीं च सुसिद्धार्थां विशल्यकरणीं शुभाम्।
चकार रक्षां कौशल्या मन्त्रैरभिजजाप च ॥

इत्यत्र 'रक्षाहेतुत्वेन बबन्ध' इति तिलकटीकायां रामः।

५. ऋग्वेदे (६, २०, ३) 'कृतब्रह्मेन्द्रो वृद्धमहाः' इत्यत्र कृतम् = दत्तं ब्रह्म = अन्नं येन स्तोतृभ्यः स इति दानरूपोऽर्थः कृधातोर्दृश्यते, स्तोतृभ्य इति चतुर्थ्यन्तपद-दर्शनात्। 'अयोध्यां प्रेषयामास धर्मात्मा कृतशासनान्' (वा० रा० १, ६७, २७) इत्यत्र 'दत्तकल्याणसंदेशपत्रान्' इति तिलकटीका। इह शासनं नाम कल्याणसंदेशपत्रादि। तत्संबद्धा प्रासङ्गिकी विशिष्टा क्रिया 'दानम्' इतीत्यस्मात् कारणात् कृधातोर्दानमर्थः। एव-मेव 'सलिलस्योदकस्य वा करणम्'[१] इत्यत्र सलिलपदसमभिव्याहारात् क्रियासामान्यवचनस्य

१. 'कुरुष्व सलिलं राजन् प्रतिज्ञामपवर्जय'—वा० रा० १, ४४, ७।
'भगीरथस्तु राजर्षिः कृत्वा सलिलमुत्तमम्'—वा० रा० १, ४४, १७।
'कृतोदकः शुची राजा स्वपुरं प्रविवेश ह'—वा० रा० १, ४४, १८।

कृधातोर्दानमर्थः[1]; सलिलपदसंबद्धायास्तादृश्या एव क्रियाया औचित्यात्। क्रियासामान्य-वाचकः कृधातुः सर्वेषां धातूनामर्थान् प्रकटयितुं प्रभवति, किन्तु तदितरे धातवः कृधातोरर्थं दर्शयितुं न क्षमा याथातथ्येन, तेषां निश्चितार्थकत्वादिति क्वापि 'दत्त्वोदकम्' 'उदकं दत्त्वा' 'दीयतामुदकं पितुः' इत्येतादृशानि वचनानि नोपलभ्यन्ते। उपलब्धौ सत्यां च तादृश-विस्तृतार्थस्य विरहः स्यात्, क्रियासामान्यवचनेन कृधातुनैव प्रकरणागतानामन्येषामप्यर्थाना-मुपस्थापनसौकर्यात्।

६. ऋग्वेदे ( ७, ६२, १ ) 'क्रत्वा कृतः सुकृतः कर्तृभिर्भूत्' इत्यत्र क्रत्वा = सर्वस्य कर्ता, कृतः = संपादित इत्यर्थः। वा० रा० ( २, १, २२ ) 'लौकिके समयाचारे कृतकल्पो विशारदः' इत्यत्र कृतः = संपादितः, कल्पः = सामर्थ्यं येन स इति। महाभारते (२, ८३, २) 'कारितः' इत्यस्यार्थो नीलकण्ठेन कृतः 'संपादितः' इति।

७. ऋग्वेदे ( ७, ११, ४ ) 'अग्निरीशे बृहतो अध्वरस्याग्निर्विश्वस्य हविषः कृतस्य' इत्यत्र संस्कारोऽर्थः[2], 'हविषः' इति पदसंनिधानात्। एवमेव 'प्र यत्कृते चमसे मर्मृजद्धरी' ( ऋ० १०, ९६, ९ ) इत्यत्रापि, 'चमसे' इति प्रसङ्गात् संस्कारार्थो ज्ञायते। 'दक्षिणे संगृभीता कृतानि' ( ऋ० १, १००, ९ ) इत्यत्र हवींषीति पदसंनिधानात् तथार्थः। तुल० 'कृतमुखः' ( अ० को० ३, १, ४ ) = कृतम् = संस्कृतं मुखमस्य [ भानु० ]।

८. ऋग्वेदे ( ६, ५८, ३ ) 'कामेन कृत श्रव इच्छमानः' इत्यत्र श्रवः = हविर्लक्षण-मन्नम् इच्छमानः = इच्छन् सन्, कामेन = पश्वादिविषयेण स्तोतृभिः कृतः = वशीकृतोऽसीति प्रसङ्गः। इह कामपदसंनिधानेन तथार्थः। वा० रा० ( २, ९, ३१ ) 'रूढश्च

---

१. 'कृत्वोदकं ते भरतेन सार्धम्'—वा० रा० २, ७६, २३।
'उत्तिष्ठ पुरुषव्याघ्र क्रियतामुदकं पितुः'—वा० रा० २, १०२, ७।
'अहं चायं च शत्रुघ्नः पूर्वमेव कृतोदकौ'—वा० रा० २, १०२, ७।
'योगक्षेमं च संप्रेक्ष्य वणिजां कारयेत करान्'—म०भार० ४, ९, १८ = दापयेत [ नी० ]।
'कृतान्तः कुरुते फलम्'—म०भार० २, ३२, १२ = ददाति [ नी. ]।
'कृतोत्तरोऽस्मिन्'—भट्टि० १२, २३ = दत्तोत्तरः [ जय० ]।

२. केशान् जानाम्यहं कर्तुं पिंषे साधु विलेपनम्'—म०भार० ४, ९, १८ = संस्कर्तुम् [ नी. ]।
'शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति। शरीरमेतत् कुरुते यद् वेदे कुरुते तनुम्॥'—महाभार० १२, २७०, २ = संस्कुरुते [ नी० ]।
'गुरुणाऽथर्वविदा कृतक्रियः'—रघु० ८, ४ = कृताभिषेकसंस्कारः [ संजी० ]।

कृतमूलश्च शेषं स्थास्यति ते सुतः' इति कुब्जायाः कैकेयीं प्रति वचनम्। चतुर्दशवर्षाणि वनं प्रति रामे प्रव्राजिते तव सुतो भरतो दृढमूलः = वशीकृतमूलबलः स्थास्यतीति प्रसङ्गः। एवमेव 'ऐहिष्ट तं कारयितुं कृतात्मा' (भट्टि०१, ११) इत्यत्र वशीकृतात्मेत्यर्थः। 'कामेन कृतो अभ्यानलर्कम्' (ऋ० ६,४९, ८) = वशीकृत इति सायणः, कामेन = काम्यमानेन फलेनेति प्रसङ्गात्। [तुल० 'वशक्रिया संवननं मूलकर्म तु कार्मणम्'—अमर० ३, २, ४ इत्यत्र 'मूलैः = ओषधिभिर्यद् वशीकरणम्' इति क्षीरस्वामी मूलकर्मेत्यर्थमाह। 'मूलकारिका' इति च वात्स्यायनः कामसूत्रे]।

९. 'यत्रा नरः समयन्ते कृतध्वजः' (ऋ० ७, ८३, ३) इत्यत्र ध्वजपदसंपर्कात् कृधातोरुच्छ्रयरूपोऽर्थो युक्तियुक्तः।

१०. 'कृते योनौ वपतेह बीजम्' (ऋ० १०, १०१, ३) इत्यत्र योनिः = सीता। सीतायां बीजवपनस्य प्रसङ्गादिह कृधातोः कर्षणमर्थः[1]। तथा च 'सप्त ग्राम्याः कृष्टे सप्तारण्या अकृष्टे' इत्यापस्तम्बमुद्धरन् सायणो द्रष्टव्यः।

११. ऋग्वेदे (८, ४, ३) 'यथा गौरो अपा कृतम्' इत्यत्राप्संनिधानात् कृधातोरर्थः संपूर्णता। 'अपा = अद्भिः, कृतम् = संपूर्णम् इति सायणः। 'कोष्ठागारायुधागारैः कृत्वा संनिचयान् बहून्' (वा० रा० २, ३, ४४) इत्यत्रापि कृधातुः संपूर्त्यर्थकः।

१२. ऋग्वेदे (१, २८, २) 'यत्र द्वाविव जघनाधिषवण्या कृता' इत्यत्र जघनपदसंनिधानाद् विस्तारोऽर्थः कृधातोः।

१३. 'येनेमा विश्वा च्यवना कृतानि' (२, १२, १४,) इत्यृग्वेदे 'नश्वराणि भुवनानि' इति प्रसङ्गात् कृधातोः स्थिरीकरणमर्थः।

१४. 'प्र वां मन्मान्यृचसे नवानि कृतानि ब्रह्म जुजुषन्निमानि' (७, ६१, ६) इत्यृग्वेदे स्तोत्राणीति प्रसङ्गात् कृधातोः समूहीकरणमर्थः।

१५. 'असौ यः पन्था आदित्यो दिवि प्रवाच्यं कृतः' (१, १०५, १६) इत्यृग्वेदे 'पन्थाः' इति प्रसङ्गात् कृधातोर्निमाणमर्थः। हरिवंशे 'मायया मायिनां वरः' इति प्रसङ्गान्निर्माणमर्थः—

---

१. अकृतं च कृतात् क्षेत्रात्—मनु० १०, ११४–अकृतम् = अनुप्तसस्यम्, कृतात् = उप्तसस्यात् (मन्व०)। फालाहतमपि क्षेत्रं न कुर्याद् यो न कारयेत्–याज्ञ० २, १५८–कुर्यात् = कृषेत्, कारयेत् = कर्षयेत्।

आकाशे दिक्षु सर्वासु योत्स्यामहमरिन्दम ।
इत्युक्त्वाऽथ रथं चक्रे मायया मायिनां वरः ॥
( २, ९६, ४३ )

उक्तपदप्रसङ्गाभावेऽर्थनिर्णयस्यासम्भवः स्यादुपनतः, स्थापनाद्यर्थानामपि प्रसङ्गोपात्तत्वात् । नैष० ( २२, ११४ ) तु स्पष्टं निर्माणमर्थः कृधातोः—

निरन्तरत्वेन विधाय तन्वि ! तारासहस्राणि यदि क्रियेत ।
सुधांशुरन्यः स कलङ्कमुक्तस्तदा त्वदास्यश्रियमाश्रयेत ॥

तारासहस्राणि निरन्तरत्वेनैकीकृत्य यद्यन्यः सुधांशुः क्रियेत = निर्मीयेतेति भावः । अस्यार्थस्योत्पादनार्थेन गतार्थता विज्ञेया ।

१६. ऋग्वेदे ( १, १३६, ४ ) 'तथा राजाना करथो यदीमहे' इतीह सेवनमर्थः, अस्मिन् मन्त्रे 'तं देवासो जुषेरन्' इत्यंशगतसेवनरूपस्यार्थस्य प्रसङ्गात् ।

१७. क्रिया खलु व्यापारमात्रम् । 'समासेन चिकीर्षितम्' ( मनु० ७, २०२ ) इत्यत्र कृधातोरर्थ इच्छार्थकसन्प्रत्ययार्थाभिभूतः । चिकीर्षितम् = अभिप्रायम् इति कुल्लूकभट्टः ।

१८. 'अभिषह्य तु यः कन्यां कुर्याद् दर्पेण मानवः' ( मनु० ८, ३६७ ) । यो मनुष्योऽहङ्कारेणाङ्गुलिप्रक्षेपमात्रेणैव कन्यां विकुर्वीत = नाशयेदित्यर्थः । कुर्यादित्यनेन विकृतिरूपाभीष्टक्रियायाश्चित्रोपस्थापनं नैव जायते । कन्यारूपोपपदस्य साहाय्येन तस्य व्यज्यते तादृशोऽभिप्रायः । 'अङ्गुलिप्रक्षेपमात्रेण नाशनम्' इत्येतादृशस्यार्थस्य प्रकल्पना तु 'तस्याशु कर्त्ये अङ्गुल्यौ दण्डं चार्हति षट्शतम्' इत्युत्तरार्धश्लोकेन जायते । एवमेव ( मनु० ८, ३६९ ) 'कन्यैव कन्यां या कुर्यात्' इत्यत्राप्यङ्गुलिप्रक्षेपेण विकारापादनमर्थः । लोकेऽप्येतादृशोऽर्थो दृश्यते ।

१९. 'वर्णानां संकरं चक्रे कामोपहतचेतनः' ( ९, ६७ ) इति मनुस्मृतौ 'चक्रे' इत्यस्यार्थः—'प्रावर्तयत्' इति, वेनद्वारकस्य भ्रातृभार्यागमनरूपवर्णसंकरस्य प्रारम्भात् । 'योऽस्यात्मनः कारयिता तं क्षेत्रज्ञं प्रचक्षते' ( मनु० १२, १२ ) इत्यत्रापि तादृश एवार्थः । अत एव 'कारयिता = प्रवर्तयिता' इति कुल्लूकभट्टः ।

२०. कृधातोरर्थो विवाहः, दारपदस्य संनिधानेन दारार्थक्रियायाः पाण्युपपीडनार्थकत्वात् । तथा च वाल्मीकीये रामायणे ( १, १८, ३७ )—

अथ राजा दशरथस्तेषां दारक्रियां प्रति ।
चिन्तयामास धर्मात्मा सोपाध्यायः सबान्धवः ॥

रघु० (५, ४०) 'दारक्रियायोग्यदशं च पुत्रम्' इत्यत्रापि मल्लिनाथेन दारक्रियाया विवाह इत्यर्थो व्यधायि। 'तथा नित्यं यतेयातां स्त्रीपुंसौ तु कृतक्रियौ' (मनु० ९, १०२) इत्यत्र दारपदाभावेऽपि स्त्रीपुंसयोर्विशेषणात् तादृशोऽर्थः।

२१. 'तस्मिंस्तावत् तपः कुर्याद् यावत् तुष्टिकरं भवेत्' (मनु० ११, २३३) इत्यत्र कृधातोरावर्तनमर्थः, पूर्वतः क्रियमाणस्य तपसः पुनः करणं नाम—आवर्तनम् इति।

२२. 'रामस्य चरितं कृत्स्नं कुरु त्वमृषिसत्तम' (वा० रा० १, २, ३२) इत्यत्र कृधातोर्वर्णनमर्थः[1], चरितपदसमभिव्याहारेण तस्य वर्णनरूपस्यार्थस्यौचित्यात्।

२३. 'प्रसादनं च रामस्य पितुश्च सलिलक्रियाम्' (वा० रा० १, ३, १६) इत्यत्र 'सलिलेन क्रिया' 'सलिलरूपा क्रिया' 'सलिलस्य क्रिया' वेत्यनेन विग्रहेण न जायते सुस्पष्टताऽर्थस्य। कृधातोः सामान्यमर्थमभिलक्ष्य विशिष्टार्थसंगतिर्न भवति सर्वजनकल्प्या। एवं स्थितौ कृधातोः पूर्वं प्रयुज्यमानविशेषणशब्दस्य क्रियया तद्रूढ्या वा नार्थबोधदुरूहता। वेणीसंहारे (पुण्यपत्तनसं० १८६७ ई०) 'वृकोदरस्योदकक्रियां कुरु' इत्यत्र 'उदकक्रिया'-शब्दप्रयोगः। उदकक्रियायाः सामान्यतोऽर्था भवन्ति—आचमनम्, जलपानम्, स्नानम्, पादप्रक्षालनमित्यादयः। जलक्रियाया विशिष्टोऽर्थो जलाञ्जलिः, तिलाञ्जलिरिति। क्रियाशब्दात् पूर्वं सलिलशब्दप्रयोगः। इह तस्य प्रासङ्गिकी क्रिया दानमिति। कृधातोः क्रियासामान्यवाचकत्वाज्जलदानस्य सामान्यमुपकरणम् अञ्जलिरिति। मरणोत्तरजलाञ्जलि-(जलदान)-साहचर्येण तिलानामपि ग्रहणम् इत्यनेन प्रकारेण सलिलक्रियाया अर्थो जलाञ्जलिस्तिलाञ्जलिश्चेति।

२४. 'अश्वहर्तारमासाद्य कृतार्थाश्च निवर्तत' (वा० रा० १, ४०, ११) इत्यत्रार्थशब्दः प्रयोजनपरकः। कृताः = सम्पन्ना[2] अर्थाः प्रयोजनानि येषां ते कृतार्था इति तत्सांनिध्येन कृधातुः संसिद्ध्यर्थकः। अयमर्थो द्वितीयप्रघट्टकीयस्यार्थस्य प्रायः संवादी।

---

१. निबन्धनमर्थो वा। यथा वा० रा० (१, ३, ३९) 'तच्चकारोत्तरे काव्ये वाल्मीकिर्भगवानृषिः' इत्यत्र तिलकटीकायां निबबन्धेत्यर्थः।

२. कृतार्थं प्रति नष्टमप्यनष्टं तदन्यसाधारणत्वाद्'—यो० सू० २, २२।

२५. यद्यप्यमरसिंहेन ( ३, ३, १५७ ) क्रियायाः शिक्षार्थो दर्शितः[1], तथापि स्वातन्त्र्येण प्रसङ्गमन्तरा प्रयुक्तः स न तमर्थं प्रकाशयतीत्यनुभवः। 'कृतास्त्रमकृतास्त्रं वा नैनं शक्ष्यन्ति राक्षसाः' ( वा० रा० १, २१, ९ ) इत्यत्रास्त्रपदसमभिव्याहारेण कृत-शब्दार्थोऽभ्युपेयते 'शिक्षित-' इति। इह कृधातोः शिक्षार्थः। एवमेव 'सम्पूर्णा कृत-विद्यानां गुहा केसरिणामिव' ( वा० रा० १, ६, २१ ) इत्यत्र 'अभ्यस्तशस्त्रशास्त्रादि-विद्यानाम्' इति तिलकटीकायां विद्यापदसांनिध्येन कृधातोरभ्यासोऽर्थः। 'रामः कृतात्मा भरतं समाश्वासयदात्मवान्' ( वा० रा० २, १०५, १४ ) इत्यत्र 'कृतात्म'-शब्दगत आत्मशब्दो बुद्धिवाचक इति कृधातुः संस्कारार्थपरः। संस्कारश्चेह शिक्षा। यद्यपि रघु० ( ३, २९ ) 'क्रिया हि वस्तूपहिता प्रसीदति' इत्यत्र क्रियाशब्दस्यार्थः प्रसङ्गमन्तरा स्वातन्त्र्येण शिक्षेति प्रतीयते, तथापि न शक्यते वक्तुं तथा, 'विनिन्युरेनं गुरवो गुरुप्रियम्' इति द्वितीये श्लोकपादे विपूर्वकनीधातोः शिक्षार्थपरकत्वात् तत्प्रसङ्गेनेहापि क्रिया-शब्दार्थः शिक्षेति। तुल० 'कृतहस्तः' ( अ० को० २, ८, ६८ )—कृतः = अभ्यस्तो हस्तो यस्य ( भानु० )। 'कृतपुङ्खः' ( अ० को० २, ८, ६८ )—कृतः = अभ्यस्तः पुङ्खः = पुङ्खयुक्तः शरो येन ( भानु० )।

२६. वा० रा० ( २, ६२, ६ ) 'राजा च कृतकार्यः स्यादहं दीर्घायुरव्ययः' इति शुनःशेपवचनं विश्वामित्रं प्रति। राजा = अम्बरीषः कृतकार्यः = समाप्तकार्यः स्यात्। इदानीम् इन्द्रद्वारा यज्ञपशोरपहरणेन यज्ञोऽसमाप्तः। तत्समाप्त्यर्थं शुनःशेपक्रयस्तत्पितुः सकाशात्। स च शुनःशेपः प्राणरक्षार्थं विश्वामित्रं प्रार्थयते। इह प्रसङ्गादेव समाप्तिरूप-स्यार्थस्यावगमः।

२७. वा० रा० ( २, ६६, ६ ) 'एतद् दर्शय भद्रं ते कृतकामौ नृपात्मजौ' इति विश्वामित्रवचनं जनकं प्रति। जनको विश्वामित्रमाजुहाव। पृष्टेन च रामलक्ष्मणकर्तृका धनुषो दिदृक्षा प्रकटिता—'=नृपात्मजौ प्राप्तकामौ स्त इति धनुर्दर्शय' इति। इह कृधातोरर्थः प्रापणमिति। एवमेव 'कृतदाराः कृतास्त्राश्च सधनाः ससुहृज्जनाः'

---

१. आरम्भो निष्कृतिः शिक्षा पूजनं सम्प्रधारणम्।
उपायः कर्म चेष्टा च चिकित्सा च नव क्रियाः॥
आख्यातं तूपचारादिति व्याख्यातवता क्षीरस्वामिनेतरेऽर्था मुख्या ऊरीकृताः। वस्तुतस्तूपपद-सान्निध्यादनन्ता अर्था इति कः शक्नुयात कर्तुं गणनाम्।

(वा० रा० १, ७७, १४) इत्यत्र रामलक्ष्मणभरतशत्रुघ्नानां लब्धभार्यत्वं लब्धास्त्रत्वं च विज्ञापितम् ।

२८. वा० रा० (२, ७६, १४) 'सोऽहं गुरुवचः कुर्वन् पृथिव्यां न वसे निशाम्' इति परशुरामवचनं रामं प्रति । यदा पूर्वं मया काश्यपाय वसुन्धरा दत्ता, तदा मां सोऽब्रवीत्—मम विषये न वस्तव्यमिति । अहं परशुरामो गुरुवचः कुर्वन् = पालयन् पृथिव्यां न वसे निशामिति भावः । एवं तावदिह प्रसङ्गाद् वचःपदसन्निधानाच्च कृधातुः पालनार्थकः । एवमेव 'बालो व्रतायमैक्ष्वाकश्चिरं राज्यमकारयत्' इति वा० रा० (२, १२, ६५) ज्ञेयम् ।

२९. तमसातटे सुप्तान् पौरजनान् हित्वा रामस्य ससीतलक्ष्मणस्य प्रस्थानसमये सारथिस्तं रथम् उदङ्मुखं स्थापयामासेति वा० रा० (२, ४६, ३४) 'उदङ्मुखं तं तु रथं चकार' इत्यत्र कृधातोरर्थः स्थापनमिति[१] ।

३०. वा० रा० (२, ४९, १६) 'काले कृतां तां मनुजैर्धन्विनामभिकाङ्क्षिताम्' इत्यत्र स्वीकरणमङ्गीकरणं वार्थः । 'निशोऽपि सोमेतरकान्तशङ्कामोङ्कारमग्रेसरमस्य कुर्याः' इति नैष० (२, ७५) 'कुर्याः' इत्यस्याङ्गीकुर्वित्यर्थः प्रकाशटीकायां समीचीनः, प्रणवमस्य वेदस्याग्रेसरं स्वीकुर्वित्यर्थस्यौचित्यात् ।

३१. 'नाराजके जनपदे कारयन्ति सभां नराः' इति वा० रा० (२, १२, ६५) 'आयोजयन्ति' इत्यर्थस्तादृशप्रसङ्गात् ।

३२. 'न मन्त्रं बहुधा कुर्यादेवं राज्ञः प्रियो भवेत्' इति महाभारते (४, ४, ४८) कृधातोर्भेदनमर्थः, बहुधा = बहुप्रकारेणेति पदसमभिव्याहारात् ।

३३. महाभारते (५, ४२, ३१)—

यत्राकथयमानस्य प्रयच्छत्यशिवं भयम् ।
अतिरिक्तमिवाकुर्वन् स श्रेयान् नेतरो जनः ॥

---

१. निक्षेपणे चापि दृश्यते—कटे कुरु, घटे कुरु, अश्मानमितः कुरु, स्थापयेति गम्यते (महाभाष्ये १, ३, १) इति ।

'कुरु करे गुरुमेकमयोघनं बहिरितो मुकुरं च कुरुष्व मे'—नैष० ४, ५९ = स्थापय [ पु० ]

'पुनः करे कर्तुमना गलन्तिकाम्'—नैष० १६, ८३ ।

'दुधाव निर्नमस्कारान् राक्षसेन्द्रपुरस्कृतान्'—भट्टि० ९, ६० = अग्रतः स्थापितान् [ जय० ]

इह कृधातोः प्रकाशनमर्थः । एवमेव तत्रैव ( १२, १२०, ८ ) 'अर्थकामः शिखां राजा कुर्याद् धर्मध्वजोपमाम्' इत्यत्र राजधर्मस्य साररूपतया वर्णनप्रसङ्गे धर्मध्वजोपमायाः शिखायाः प्रकाशनं प्रकटनं वाऽभिप्रेतम् ।

३४. 'हर्षेण महता युक्तः कृतसंज्ञो वृकोदरे' इति महाभार० ( ७, १३७, ४० ) कृधातोर्ग्रहणं ज्ञानं वार्थः, संज्ञायाः = सङ्केतस्य गृह्यमाणत्वात् ।

३५. नियमपूर्वकविद्यास्वीकारे वक्तुरपादानसंज्ञा भवतीति 'आख्यातोपयोगे' ( १, ४, २९ ) इति पाणिनीयसूत्राज्ज्ञायते । महाभार० ( १२, २, ४ )—

स बालस्तेजसा युक्तः सूतपुत्रत्वमागतः ।
चकाराङ्गिरसां श्रेष्ठाद् धनुर्वेदं गुरोस्तदा ॥

इह 'अङ्गिरसां श्रेष्ठाद् गुरोर्धनुर्वेदं चकार' इति पञ्चमी । गुरुरूपवक्तुरपि सुस्पष्टमुल्लेखः । धनुर्वेदपदाद् विद्याया अपि निर्देश इत्येतेषां सर्वेषां साहाय्येन कृधातोरर्थः—'अध्ययनम्'[1] इति निश्चीयते ।

३६. 'स्तम्बशकृतोरिन्' ( ३, २, २४ ) इति पाणिनीये व्याकरणेऽनुवृत्तः कृधातुर्विसर्गे वेदितव्यः, शकृत्पदसंनिधानात् ।

३७. 'शब्ददर्दुरं करोति' इत्यत्राष्टाध्याय्याम् ( ४, ४, ३४ ) प्रकृतिप्रत्ययविभागपूर्वक ज्ञानार्थकः कृधातुः । सिद्धान्तकौमुद्यास्तत्त्वबोधिनीटीकाकारस्तु 'प्रकृतिप्रत्ययविभागेन व्युत्पादयतीत्यर्थः, अभिधानस्वाभाव्याद् व्युत्पादन एवायं प्रत्ययः' इत्यभिधाय मद्दर्शितार्थेन सह संवदत्येव । इह शब्दपदसंनिधानेनैतादृशार्थः, शब्दमुच्चारयतीत्यर्थे वैयाकरणार्थकस्य शाब्दिकरूपशब्दस्य प्रयोगाभावात् ।

३८. 'हाहेति कुर्वतस्तस्य प्रहृष्टास्ता वराङ्गनाः' इत्यत्र हरिवंशे कृधातोरर्थ आविष्करणं प्रकटनं वा, हाहेति पदसंनिधानाच्चीत्काराद्यर्थानामसंभवात् ।

३९. 'भूवादयो धातवः' ( १, ३, १ ) इति सूत्रे 'बह्वर्था अपि धातवो भवन्ति' इति प्रसङ्गे महाभाष्यकारेण निर्दिष्टम्—'करोतिरभूतप्रादुर्भावे दृष्टो निर्मलीकरणे चापि

---

१. 'कलापिवैशम्पायनान्तेभ्यश्च' ( पा० अ० ४, ३, १०४ ) इत्यत्र काशिका—'प्रत्यक्षकारिणो गृह्यन्ते, न तु शिष्यशिष्याः' इति । तत्र च पदमञ्जरी—'अत्र करोतिरध्ययने वर्तते' इति ।

वर्तते—'पृष्ठं कुरु' 'पादौ कुरु' 'उन्मृदानेति गम्यते' इति। स्नानवेलाप्रसङ्गेऽयमर्थो विज्ञेयः[१]।

४०. 'जयस्तम्भं चकार सः' (रघु० ४,५९) इत्यत्र परिवर्तनरूपोऽर्थः कृधातोः, जयस्तम्भत्वेन परिवर्तनात्।

४१. 'वप्रक्रियामृक्षवतस्तटेषु' (५,४४) इति रघु० कृधातोरर्थः क्रीडेति। कविकुलगुरुणा कालिदासेन मेघदूतस्य द्वितीये श्लोके तु 'क्रिया' इत्यस्य स्थाने क्रीडाया एव प्रयोगं कृतवता साधीयोऽर्थो दर्शितः—'वप्रक्रीडापरिणतगजप्रेक्षणीयं ददर्श' इति।

४२. 'कथां प्रमत्तः प्रथमं कृतामिव' (४, १) इत्यभिज्ञानशाकुन्तले कृधातोरभिधानमर्थः संजायते, कथापदसमभिव्याहारात् (तुल० वा० रा० २, ९७, ५)। रघु० (३, २१) 'चकार नाम्ना रघुमात्मसंभवम्' इत्यत्र 'नृपेण चक्रे युवराजशब्दभाक्' (३, ३५) इत्यत्र च ख्यापनार्थः कृधातोः, नामशब्दयोः[२] समभिव्याहारात्। किरातार्जुनीये 'भवता तस्य कृतः कृतावधेः' (२, ४६)=परिभाषितकालस्य [ घण्टा० ]।

४३. '(मद्गुरोः) क्रियाविघाताय कथं प्रवर्तसे' (३, ४४) इत्यत्र रघुवंशे कृधातोर्यज्ञार्थः, गुरुपदसंनिधानेन क्रियायाः क्रतुहोमप्रभृतयोऽर्थाः। सति दुर्जनादिसांनिध्ये तदर्थाः स्युः परपीडादयः।

४४. 'तदोजसस्तद्यशसः स्थिताविमौ वृथेति चित्ते कुरुते यदा यदा' (१, १४) इत्यत्र नैषधीये चरिते चित्तपदसंनिधानात् कृधातोरर्थो विचारो विवेचना वा संपद्यते।

४५. नैषधीये चरिते (१८, ६०)—

पीतताववमुखासवोऽधुना भृत्य एष निजकृत्यमर्हति।
तत् करोमि भवदूरुमित्यसौ तत्र संन्यधित पाणिपल्लवम्॥

इत्यस्मिन् पद्ये 'ऊरुम्' इति पदसंनिधानेन, 'तत्र संन्यधित पाणिपल्लवम्' इति च प्रसङ्गेन कृधातोरर्थः संवाहनं जायते। नैष० (१८, १३४) 'सेवया व्यजनचालनाभुवा भूय एव चरणौ करोतु वा' इत्यत्र मल्लिनाथो जीवातुटीकायामाह—'धातूनामनेकार्थत्वात्

१ विशेषस्तु 'बुन्देलखण्ड की प्राचीनता' इत्यस्मदीयग्रन्थे 'करना की तूती' इत्यत्र (१०१ पृ०) द्रष्टव्यः।

२. कृतलक्षणः—अ० को० (३, १, १०)—कृतम्=उच्चारितम्, लक्षणम्=नामास्य [ भानु० ]।

सेवताम् इत्यर्थः' इति। प्राचीनैराचार्यैर्विश्लेषणमविधाय खल्वेतावन्मात्रं व्याख्याय कृत-कृत्यता स्वकीया समाश्रुता।

४६. भट्टि० ( ११, २३ )—

चकार कान्तोऽप्यधरोऽङ्गनानाम्
सहोषितानां पतिभिर्लघुत्वम् ॥

इह कृधातोरर्थः सूचनं लघुत्वपदसामर्थ्यात्। यद्यप्येतेन पदेन कृधातुः प्रकाशन-रूपमर्थमपि शक्नोति सूचयितुम्, तथापि 'आबद्धनेत्राञ्जनपङ्कलेशस्ताम्बूलरागं बहुलं दधानः' इति दर्शनात् पैशुन्यरूपार्थस्यैवौचित्यात्।

एवं तावदन्यपदसंनिधानलभ्याः षट्चत्वारिंशदर्थाः परीक्षिता इह कृधातोः—१. उत्पत्तिः, २. पाकः, ३. अनुष्ठानम्, आचरणम्, ४. बन्धनम्, ५. दानम्, ६. संपादनम्, ७. संस्कारः, ८. वशीकारः, ९. उच्छ्रयः, १०. कर्षणम्, ११. संपूर्णता, १२. विस्तारः, १३. स्थिरीकरणम्, १४. समूहीकरणम्, १५. निर्माणम्, १६. सेवनम्, १७. इच्छा, १८. नाशः, १९. प्रवर्तनम्, २०. विवाहः, २१. आवर्तनम्, २२. वर्णनम्, २३. अञ्जलिः, २४. संसिद्धिः, २५. शिक्षा (अभ्यासः), २६. समाप्तिः, २७. प्रापणम्, २८. पालनम्, २९. स्थापनम्, ३०. अङ्गीकारः, ३१ आयोजनम्, ३२. भेदनम्, ३३. प्रकाशनम्, ३४. ग्रहणम् ( ज्ञानम् ), ३५. अध्ययनम्, ३६. विसर्गः, ३७. प्रकृतिप्रत्ययविभागपूर्वकं ज्ञानम्, ३८. आविष्करणम्, ३९. निर्मलीकरणम्, ४०. परिवर्तनम्, ४१. क्रीडा, ४२. अभिधानम्, ४३. यजनम्, ४४. विचारः, ४५. संवाहनम्, ४६. पैशुन्यं चेति।

निदर्शनमात्रा अर्था इमे। कृधातोरर्थानां नास्तीयत्ता। तादृशानां तादृशानामुप-पदानां संनिधानेन तादृशास्तादृशा अर्था[1] जायन्ते।

सांप्रतमुपपदसंनिधानमन्तरा कृधातोर्विशुद्धा अर्था निर्दिश्यन्ते। तेषामुपपदानां संनिधानाभावे विशुद्धा अर्थास्ते प्रतीयन्ते। वस्तुतः क्रियासामान्यवाचकस्य कृधातोः स्फटिकस्येव रङ्गराहित्यमिव स्वार्थेतरार्थराहित्यम्—

१. (अ) उपपदमन्तरा कृधातोर्हननमर्थः प्राथम्यं भजते। हिंसार्थककृधातोः संक्रान्ति-रादावेव प्रत्यपादि मया। ऋग्वेदे ( १, १६८, ३ ) 'हस्तेषु खादिश्च कृतिश्च सं दधे'

---

१. 'एष देवो विपा कृतोऽति ह्वरांसि धावति'—ऋ० ९, ३, २ इत्यत्र प्रासङ्गिकसोमपदसंनिधानेन कृधातोरर्थः—'अभिषवः'।

'वीतहोत्रा कृतद्वसू' ( ऋ० ८, ३१, ९ )=याचमानकृतधनौ [ सा. ]।

इत्यत्र कृतेरर्थः कर्तनी। 'इन्द्रस्य वोचं प्र कृतानि वीर्या' ( ऋ० २, २१, ३ ) = 'वृत्र-हननादिरूपाणि' इति सायणः। 'अभाग्या तत्र जीवामि कर्तव्ये सति पाण्डव' ( महाभार० ४, २०, २९ ) इत्यत्र 'मर्तव्ये' इति नीलकण्ठः। हिंसार्थककृधातोरपि सिध्यतीदं रूपम्। एवमेव 'एष मे क्रियमाणाया भारतेन तदा विभो' ( महाभार० ५, १७७, ४१ इत्यत्र 'हिंस्य, मानायाः' इति 'संभूय तस्य नृपतेः समारब्धाश्चिकीर्षितुम्' 'महाभार० ७, ५५, २८ ) इत्यत्र 'अपकारं कर्तुम्' इति, 'आशाकृतश्च राजेन्द्र तपो दीर्घं समाश्रितः[१]' ( महाभार० १२, १२८ ४ ) इत्यत्र च '–हतः' इति नीलकण्ठेनार्था दर्शिताः, व्युत्पत्तिस्तु हिंसार्थकात् क्रैयादिक कॄधातोर्दर्शितः। एतेषु रूपेषूभयोर्धात्वोरविभाज्ये सत्यपि संक्रमणे प्रयोगभूयिष्ठस्य करणार्थ-कस्य कृधातोः प्रवेश उद्गाढं प्रतीयते। महाभारते ( ५, ७८, ५ ) एक एव तादृशो लभ्यते प्रयोगो येन करणार्थककृधातोर्हिंसार्थकत्वं सिध्यति निर्भरम्—

'कुर्वन्ति तेषां कर्माणि येषां नास्ति फलोदयः।'

नीलकण्ठेनेह 'कृण्वन्ति = हिंसन्ति' इत्यर्थं प्रतिपादयताऽस्य व्युत्पत्तिरपि हिंसार्थकात् कॄधातोर्मता, तन्न समीचीनम्, तनादौ हिंसार्थकस्य कस्यापि कॄधातोरसत्त्वात्।

२. ( अ ) रूढ्या केचिच्छब्दाः स्वकीयमर्थं हित्वा नवीनमर्थं प्रकाशयन्ति। 'कृतम्' इत्यस्यार्थो भवति—विहितम्, अनुष्ठितम् इत्यादिः। एतादृशी प्रवृत्तिरपि दृश्यते तत्रार्थ-परिवर्तनमूले। कृते सति पर्याप्तता जायते। पर्याप्ततायां च सत्यां निषेधप्रवृत्तिः सांसिद्धिकी। रघुवंशे ( ११,४१ ) 'सारतोऽयमथवा गिरा कृतम्' इत्यत्र पर्याप्तमर्थः। अलंशब्दयोगे तृतीयावच्चेह तृतीया विभक्तिः, निषेधक्रियां प्रति करणत्वात्। धूर्तविटसंवादे ( ७८ पृ० ) 'कृतमञ्जलिना' इति शोभनः प्रयोगः। तत्रैव ( ८९ पृ० ) 'कृतं पाद्येन' इत्ययं प्रयोगोऽपि तथैव। 'अथवा कृतं सन्देहेन' इत्यत्र शाकुन्तले 'कृतमश्वेन' इत्यत्र च कृतशब्दस्य पूर्वं प्रयोगः। 'कृतमाविष्कृतपौरुषैर्भुजैः' ( २,१७ ) इत्यत्र च किरातार्जुनीयेऽपि यथास्थिति प्रयोगः। 'कृतमिति निषेधार्थमव्ययं चादिषु पठ्यते' इति मल्लिनाथः, किन्तु नोपलभ्यते गणपाठेऽयं शब्दः। गणरत्नमहोदधौ ( १,५ ) दृश्यते चादिगण एषः। तद्वृत्तौ च 'कृतमिति निवारणनिषेधयोः, वत्स कृतं साहसेन।' इत्यपि व्याख्यातम्। रघुवंशटीकायां ( ११,४ ) सोऽवश्यं निर्दिशति वर्धमानम्—"कृतं निवारणनिषेधयोः' इति गणव्याख्याने" इति। वाल्मीकीयरामायणे ( १,१९,७ ) 'कृतश्रमो निरुत्साहः' इत्यत्र 'कृतवृथाप्रयासः'

---

१. कृतकौतूहलस्तेषु मुक्तश्चर यथासुखम्'—म० भार० १२, २८८, ११ = छिन्न-[नील०]।

इति तिलकटीकया निर्दिश्यमानं तस्य बीजं दृश्यते। गणरत्नमहोदधौ चादिगणे पठितत्वादस्यासमस्तता ज्ञायते। इह वाल्मीकीयरामायणे तु समासो दृश्यते।

३. (अ) कदाचित् सादृश्येन जायतेऽर्थविस्तारः। निमित्तार्थकश्चतुर्थ्यर्थकश्च 'कृते' इति शब्दो दृश्यते प्रयुज्यमानः परत ऋग्वेदात्। क्तान्तकृतशब्दस्य सप्तम्यन्तं रूपमिदमसंशयम्। अस्य योगे षष्ठीविभक्तिरपि 'कर्तृकर्मणोः कृति' इति सूत्रेण विधीयते कृदन्तमभिलक्ष्य[1]। क्वचिच्च सा समस्यतेऽपीत्येतस्याव्ययत्वं[2], कादाचित्कं सप्तम्यन्तप्रतिरूपकम्। 'अर्थे' इत्यस्य शब्दस्य सादृश्येन प्रयोगारम्भः[3]। क्तान्तकृतशब्दस्यार्था भवन्ति—कार्यम्, फलम्, इत्यादयः।

४. (अ) क्तान्तकृतशब्दो भाववचनो मूलतः कार्यार्थकः। तच्च कार्यं साहाय्यरूपमनुग्रहरूपं वा कालेनोपकारपरं संजातम्। अयमुपकारार्थ आधिक्येन 'कृतज्ञ'शब्दे दृश्यते—'शास्त्रज्ञश्च कृतज्ञश्च पुरुषान्तरकोविदः' (वा० रा० २,१,२५) इत्यत्र 'परेणाल्पमपि कृतम्=उपकारं जानाति तथा' इति तिलकटीकायाम्। जानातेरभावे केवलस्य कृतशब्दस्याप्युपकाररूपोऽर्थो विद्यत एव, यथा वाल्मीकीये रामायणे (२,३९,२३)–'न कुलं न कृतं विद्या न दत्तं नापि संग्रहः' इत्यत्र।

५. (अ) 'यद्यपि हेतुस्तव खादने स्यान्न ते वेदः कारणं नार्यधर्मः' इति महाभारते (१२, १४१, ८९) कारणम्=प्रमाणम् इत्यर्थः। यद्यपि प्रसङ्गतो वेदानां प्रामाण्यं शक्यते ज्ञातुम् इत्ययमर्थादेशः, तथापि कारणशब्दः प्रमाणपरो न प्रसिद्धः।

६. (अ) हरिवंशपुराणे (२,५०,२) 'कन्यार्थे चागतः कृष्णस्तत्रापि न कृतोऽतिथिः' इत्यत्र कृधातुः क्रियासामान्यवाचक इति विशिष्टमर्थं नाभिव्यनक्ति। अतिथिं प्रति

---

१. सत्कारार्हा कृते तव—वा० रा० २, १२, १७।

२. नहि ते स्त्रीवधकृते घृणा कार्या नरोत्तम—वा० रा० १, २५, १७।
 यत्कृते पितरः पुत्रान् जनयन्ति शुभार्थिनः—वा० रा० १, ६२, ९।
 स्त्रीकृते यः प्रियं पुत्रं वने प्रस्थापयिष्यति—वा० रा० २, १२, ८१।
 यत्कृते व्यसनं मम—वा० रा० २, १३, १९।
 अपि त्रैलोक्यराज्यस्य हेतोः किं नु महीकृते—भगवद्गी० १, ३५।

३. यदा व्रजति संग्रामं ग्रामार्थे नगरस्य वा—वा० रा० २, २, ३६।
 सर्वा देवान् नमस्यन्ति रामस्यार्थे मनस्विनः—वा० रा० २, २, ५२।

प्रयुज्यमानो भाव आतिथ्यम्। अतिथिं प्रति प्रेर्यमाणया क्रियया तस्य आसनोदकदानादि-रूपयाऽर्चनं विधीयत इत्यातिथ्येनार्चनरूपस्तदर्थः।

७. (अ) हरिवंशपुराणे (२,६५,३२) 'कृतिरेषा हि भद्रं ते पारिजातस्य सुप्रभे' इत्यत्र कृतिशब्दार्थो न सारल्येन शक्यो व्याख्यातुम्। 'पारिजातस्य एषा कृतिः' इत्यनेन कार्यम्, चेष्टा, व्यापार इत्यनेकेऽर्थाः प्रतीयन्ते। पारिजातस्य शक्तिमत्ता सुविज्ञातेति सामर्थ्यं कृतेरर्थः। स्वभावोऽपि तदर्थो विज्ञेयः।

व्याख्याताः सर्वेऽप्यर्थाः प्रायो विशेषीकृता इत्यर्थसंकोचो नामेह वेदितव्यः। विशेषाणामर्थानां साधारणीकरणे त्वर्थविस्तारो जायते। अर्थबाहुल्यमूलेऽस्य धातोः क्रियासामान्यवाचकत्वं[१] निमित्तमिति नास्तीयत्ताऽर्थानामेतदीयानाम्।

भारोपीयभाषायामस्य मूलरूपं 'कुएर्' इति। एष धातुस्तत्र करणे निर्माणे चार्थे प्रयुक्तः। लिथुआनियन्-भाषायां 'कुर्ति' इति 'केरेति' इति च प्रयोगद्वयं करणेऽर्थे लभ्यते। अवेस्ताभाषायां 'कॅरॅनओइति' (< कृणोति–वैदि०) इति प्रयोगोऽपि तथा। यथा—"स्कन्नम् अस्य मनः कृनूइदि" (अवेस्ता, यस्न) कृनूइदि (< कृणुधि—वैदि०)। अत्र मनसो दौर्मनस्यं व्याख्यातम्।



१. तुल० 'कृञ्चानुप्रयुज्यते लिटि' इत्यनेन विहितोऽनुप्रयोगः। यथा—अमयाञ्चकार (रघु० ६, १३); आनयाञ्चक्रे (वा० रा० २, ३, २४) इत्यादौ।

# सारस्वती सुषमा

## वाराणसेयसंस्कृतविश्वविद्यालयस्य

## त्रैमासिकी पत्रिका

### पञ्चदशवार्षिकी लेखकानुक्रमणिका



* संख्यायुगलं वर्षाङ्क पृष्ठानां संसूचकम् सर्वत्र ।

(य)



(र)

# सारस्वती सुषमा

## वाराणसेयसंस्कृतविश्वविद्यालयस्य पत्रिका

## पञ्चदशवार्षिकी लेखानुक्रमणिका

२७

# सम्पादकीयम्



# ग्रन्थः

## चयनिका



## विविधम्

# जीवनवृत्तम्



# ग्रन्थसमालोचनम्

## ७१-७२ वर्षयोः प्रकाशिता ग्रन्थाः

| | | | |
|---|---|---|---|
| १. | रामायणमहाभारतराजनीतिबिन्दुः— | प्रणेता श्रीवदरीनाथकाशीनाथशास्त्री | १.५० |
| २. | वेदान्तदर्शनबिन्दुः— | प्रणेता श्री एस० सुब्रह्मण्यशास्त्री | २.७५ |
| ३. | व्याकरणदर्शनबिन्दुः— | ,, प०श्रीरघुनाथशर्मा | ३.७५ |
| ४. | प्राच्यभारतीयम् ऋतुविज्ञानम्— | ,, डॉ० धुनीरामत्रिपाठी | १८.०० |
| ५. | विज्ञप्तिमात्रतासिद्धिः — | संपादकौ श्रीथुबतनछोगडुपशास्त्री प० रामशङ्करत्रिपाठी च | ३९.२५ |
| ६. | महार्थमञ्जरी— | संपादकः—म० म० गोपीनाथकविराजः | १७.५० |
| ७. | विष्णुधर्मोत्तरपुराणम्— ( चित्रसूत्रम् ) | संपादकः—डॉ०अशोकशास्त्री | ७.२५ |
| ८. | विशुद्धिमग्गो ( ३ यो भागः ) | संपादकः—भदन्तरेवतधम्मः | २७.०० |

| | | | |
|---|---|---|---|
| ९. | कल्किपुराणम् | संपादकः-डॉ०अशोकचटर्जी शास्त्री | १८.०० |
| १०. | पाणिनीयव्याकरणे प्रमाणसमीक्षा—प्रणेता प० रामप्रसादत्रिपाठी | | २६.२५ |
| ११. | तन्त्रसंग्रहः | संपादकः-म० म० प० गोपीनाथकविराजः | |
| | ( प्रथमो भागः ) | ,, | १६.०० |
| | ( द्वितीयो भागः ) | ,, | १७.०० |
| १२. | तन्त्ररत्नम् ( चतुर्थो भागः ) | संपादकः-प० टी० वे० रामचन्द्रदीक्षितः | |

## मुद्रिता ग्रन्थाः

| | | | |
|---|---|---|---|
| १. | उकरा— | संपादकः- | प०विभूतिभूषणभट्टाचार्यः |
| २. | सामगानम्— | ,, | प०विभूतिभूषणभट्टाचार्यः |
| ३. | गोरक्षसिद्धान्तसंग्रहः— | ,, | प०जनार्दनपाण्डेयः |
| ४. | नानकचन्द्रोदयमहाकाव्यम्— | ,, | प०व्रजनाथझाः |
| ५. | शुल्वसूत्रम्— | ,, | प०विभूतिभूषणभट्टाचार्यः |
| ६. | लघुकाशिका— | प्रणेता- | प०सुदर्शनाचार्यत्रिपाठी |
| ७. | न्यायकुसुमाञ्जलिः— | संपादकः- | प०दुर्गाधरझाः |
| ८. | पालित्रिपिटकसद्दानुक्रमणिका— | ,, | श्रीभदन्तरेवतधम्मः |
| | ( १ भागः ) | ,, | ,, |
| | ( द्वितीयो भागः ) | ,, | ,, |
| ९. | भारतीयविचारदर्शनम्— | प्रणेता- | डॉ० हरिहरनाथत्रिपाठी |

## मुद्र्यमाणग्रन्थाः

| | | |
|---|---|---|
| १. | काव्यप्रकाशः— | संपादकः-डॉ० गौरीनाथशास्त्री |
| २. | परिभाषेन्दुशेखरः ( हैमवतीटीका सहितः ) | संपादकः-प० कालिकाप्रसादशुक्लः |
| ३. | सिद्धान्तसार्वभौमः— | ,, प० मीठालालओझाः |
| ४. | तत्त्वचिन्तामणिः— | ,, प० श्रीबदरीनाथशुक्लः |
| ५. | प्रक्रियाकौमुदी— | ,, प० मुरलीधरमिश्रः |
| ६. | व्याकरणदर्शनपीठिका— | प्रणेता-प० रामाज्ञापाण्डेयः |
| ७. | वाक्यपदीयम् ( तृतीयकाण्डम् ) | व्याख्याकारः-प० रघुनाथशर्मा |
| ८. | गोरक्षसंहिता | संपादकः-प० जनार्दनपाण्डेयः |
| ९. | न्यायकौस्तुभः ( तृतीयो भागः ) | प्रणेता-महादेवपुणतामकरः |
| १०. | जातकट्ठकथा | प्रणेता-श्रीबुद्धघोषाचार्यः |
| ११. | तन्त्रसंग्रहः ( तृतीयो भागः ) | प० व्रजवल्लभद्विवेदः |

———

रजिस्टर्ड न्यूजपेपर्स एक्ट के नियम के अन्तर्गत

# विज्ञप्ति

| | |
|---|---|
| १. प्रकाशन का नाम | सारस्वती सुषमा |
| २. प्रकाशन की तिथि | त्रैमासिक |
| ३. मुद्रक का नाम | श्री घनश्याम उपाध्याय |
| राष्ट्रियता | भारतीय |
| पता | वाराणसेय संस्कृत विश्वविद्यालय-मुद्रणालय, वाराणसी। |
| ४. प्रकाशक का नाम | सञ्चालक, अनुसन्धानसंस्थानं |
| राष्ट्रियता | भारतीय |
| पता | वाराणसेय संस्कृत विश्वविद्यालय, वाराणसी। |
| ५. सम्पादक का नाम | सञ्चालक अनुसन्धानसंस्थान |
| राष्ट्रियता | भारतीय |
| पता | वाराणसेय संस्कृत विश्वविद्यालय |
| ६. स्वामित्व | वाराणसेय संस्कृत विश्वविद्यालय, वाराणसी। |

मैं डॉ० भागीरथप्रसादत्रिपाठी 'वागीश शास्त्री' घोषित करता हूँ कि उपरिलिखित विज्ञप्ति मेरी जानकारी के अनुसार बिलकुल ठीक है।

संञ्चालक
अनुसंधानसंस्थान
हस्ताक्षर

# सारस्वती सुषमा

## वाराणसेय-संस्कृत-विश्वविद्यालय-पत्रिका

१. एषा देशे विदेशे च लब्धप्रसरा त्रैमासिकी संस्कृतपत्रिका।

२. अस्याः प्रकाशनं प्रतिवर्षं ज्येष्ठ-भाद्रपद-मार्गशीर्ष-फाल्गुनपूर्णिमासु भवति।

३. अस्याः प्रधानमुद्देश्यं संस्कृतज्ञेषु स्वोपज्ञानुसन्धानप्रवृत्तेः समालोचनाप्रवृत्तेश्चोद्बोधनं प्रोत्साहनं चास्ति।

४. अस्यां वाराणसेयसंस्कृतविश्वविद्यालयस्थानामन्येषां च विदुषां स्वोपज्ञविचारपूर्णा अनुसन्धानप्रधाना निबन्धाः प्रकाश्यन्ते।

५. लेखकेन प्रकाशितस्य निबन्धस्य पञ्चविंशतिः प्रतिमुद्रणान्युपलब्धानि स्युः।

६. अस्यां पत्रिकायां विशिष्टानां हिन्दीसंस्कृताङ्ग्लग्रन्थानां समालोचनाः प्रकाश्यन्ते। तदर्थं ग्रन्थकृद्भिर्ग्रन्थस्य द्वे प्रतिकृती प्रेषयितव्ये।

७. 'प्रस्तोता, वाराणसेयसंस्कृतविश्वविद्यालय, वाराणसी' इति संकेतेन ( 'बैंकड्राफ्ट' अथवा 'पोस्टल आर्डर' इत्येतेनैव ) मूल्यं प्रेषणीयम्।

८. पत्रिकासम्बन्धी सर्वविधः पत्रव्यवहारः "सम्पादक, सारस्वती सुषमा, वाराणसेय-संस्कृत-विश्वविद्यालय, वाराणसी–२" इति सङ्केतेन विधेयः।

प्रकाशक—सञ्चालक, अनुसन्धानसंस्थान, वाराणसेय-संस्कृत-विश्वविद्यालय, वाराणसी।

मुद्रक—श्री घनश्याम उपाध्याय, वाराणसेय-संस्कृत-विश्वविद्यालय-मुद्रणालय, वाराणसी।

मु० सं०–१०६/७२